# THE ABHIJNÂNA-S'ÂKUNTALA

OF

# KÂLIDÂSA

WITH

The Commentary (Arthadyotanikâ)

OF

## RÂGHAVABHATTA.

EDITED BY

NÂRÂYAṆA BÂLAKṚISHṆA GODABOLE. B.A.

AND

KÂS'ÎNÂTHA PÂṆḌURANGA PARABA.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE NIRṆAYA-SÂGARA PRESS.

BOMBAY.

1883.



Price 1½ Rupees.

महाकविश्रीकालिदासविरचितं

# अभिज्ञानशाकुन्तलम्

राघवभट्टकृतार्थद्योतनिकया समेतम् ।




नारायण बालकृष्ण गोडबोले

काशीनाथ पाण्डुरङ्ग परब

इत्येताभ्यां संस्कृतम् ।





तच्च

शाके १८०९ वत्सरे

मुम्बय्यां

निर्णयसागरयन्त्रालयाधिपतिना

मुद्रितम् ।

मूल्यं सार्धो रूप्यकः ।

# प्रस्तावना.

महाकवि श्रीकालिदासकृत अभिज्ञानशाकुंतल नाटक हें आबालवृद्धांस माहित आहे. याच्या योग्यतेविषयीं जितकें लिहावें तितकें थोडेंच. या नाटकाची कीर्ति आमच्या लोकांत तर होतीच पण इंग्रजी भाषेंत सर् उइल्यिम् जोन्स् साहेबांनीं भाषांतर केल्यानंतर ती सर्व युरोपखंडभर पसरली. तें भाषांतरच वाचून युरोपीय लोक यास इतके भुलले कीं मूळग्रंथाचा स्वाद घेण्याकरितां ते संस्कृतावर परिश्रम करूं लागले व पुढें हिंदुस्थानांत चांगलीं वाचण्यासारखीं नाटकें आहेत अशी त्यांची खात्रीही होत चालली. पण त्या सर्वांत कालिदासास जें आरंभींच अग्रगण्यत्व मिळालें त्यावरून तो ढळला तर नाहींच, पण त्यास उलटें "हिंदुस्थानांतील शेक्स्पियर्" हें नांव मिळालें. शाकुंतल नाटकाचीं भाषांतरें युरोपांतील बहुधा सर्व भाषांत झालीं आहेत. आमच्या बहुतेक देशी भाषांतही झालीं आहेत. मराठींत तर पांच सहा आहेत. हा ग्रंथ फारच लोकप्रिय आहे. हा कितींदा वाचला तरी पुनः वाचावासा वाटतो. याचा रंगभूमीवर प्रयोग कितीही वेळां पाहिला तरी पुनः पहावासाच वाटतो. त्यांत संगीतानें तर हल्लीं फारच प्रिय झाला आहे. असो.

या नाटकाच्या आजपर्यंत ज्या आवृत्ति छापल्या गेल्या त्यांवरून असें दिसतें कीं, याचे दोन रीतीचे पाठ आहेत. एक गौडीय व दुसरा पाश्चिमात्य. या दोनही पाठांत कांहीं ठिकाणीं बराच फेर आढळतो, पण गौडीय पाठांत तिसऱ्या अंकाच्या शेवटीं तर सुमारें त्या अंकाचा एकचतुर्थांश ग्रंथ जास्ती आहे. बंगाल्यांतील सर्व प्रती या पाठाच्या आहेत, ह्मणून त्यांस गौडीय ह्मणतात. पाश्चिमात्य पाठ काशी व इतर पश्चिम भागांतील प्रदेश यांत प्रसिद्ध आहे. दोनही पाठ ताडून पा-

इतां पाश्चिमात्य पाठच चांगला व कवीचा खरा अशी खात्री झाली आहे व याच पाठाची एक सुंदर आवृत्ति प्रोफेसर मोनियर् उइलियम्स् यांनीं सन १८६७ मध्यें लंडन येथें स्वकृत इंग्रजी टिप्पणीनें अलंकृत करून छापिली.

अशा सर्वमान्य पुस्तकावरील टीका आजपर्यंत कोणीही छापून प्रसिद्ध केल्या नाहींत हें पाहून आश्चर्य वाटतें. मोनियर् उइलियम्स् साहेबांस कातवेम, चंद्रशेखर व शंकर यांनीं केलेल्या तीन टीका उपलब्ध होत्या पण त्या त्यांनीं सबंध न छापतां मधून मधून थोडे थोडे उतारे आपल्या टिप्पणींत दिले आहेत. या तीनही टीका गौडीय पाठावर आहेत. पाश्चिमात्य पाठावर एकही टीका आह्मांस माहीत नव्हती. तेव्हां नुसतें संस्कृत मूळ देऊन वर संस्कृतजिज्ञासु विद्यार्थ्यांच्या उपयोगीं पडण्यासारख्या अर्थप्रदर्शक टीपा द्याव्या असा विचार करून हा ग्रंथ छापण्यास सुरवात केली. लेखी प्रतींच्या अभावामुळें सर्वमान्य अशा मोनियर् उइलियम्स् साहेबाच्याच आवृत्तीवरून मूळ घेणें प्राप्त झालें व टीपाही छापण्यास आरंभ झाला. इतक्यांत आमचे मित्र रा. विष्णु दाजी गद्रे यांनीं एक टीकेची प्रत मिळवून दिली. यांत आरंभापासून सहाव्या अंकाच्या अखेरपर्यंत ग्रंथ आहे. अक्षर फार वाईट व वाचण्यास कठीण असून पदोपदीं अशुद्धें आहेत. मधून मधून ग्रंथ पाहिल्यानंतर ही पाश्चिमात्य पाठावर टीका आहे अशी खात्री झाली व प्रत्यंतरें शोधण्याच्या उद्योगास लागलों. पुढें वे. रा. रा. गोविंदशास्त्री निरंतर यांनीं एक प्रत दिली. ती समग्र असून अक्षर सुवाच्य होतें. तिसरी प्रत आमचे मित्र रा. श्रीधर रामकृष्ण भांडारकर यांनीं एल्फिन्स्टन् कॉलेजांतील पुस्तकालयांतून मागवून दिली. परंतु ही प्रत गोविंदशास्त्र्यांच्या प्रतीवरून उतरली असल्यामुळें व हींत लेखकप्रमाद फार असल्यामुळें या प्रतीचा उपयोग झाला नाहीं. चवथी प्रत वे. रा. रा. आपाशास्त्री खाडिलकर यांनीं आपल्या संग्रहांतून मोठ्या संतोषानें काढून दिली. या प्रतींत मूळही आ-

हे. पांचवी प्रत डा. भाऊ दाजी यांच्या ग्रंथसंग्रहांतील बांबे ब्रांच् आफ् धी रॉयल् एशिआटिक् सोसायटीच्या लायब्ररींत ठेवलेली मिळाली. हिचें पहिलें एक पत्र नाहीं. बाकी ग्रंथ संपूर्ण आहे. याप्रमाणें पहिली प्रत मिळाल्यापासून दोन महिन्यांच्या आंतच बाकीच्या सर्व प्रती मिळाल्या. तेणेंकरून सर्व टीकाग्रंथ छापण्यास उमेद येऊन ह्या उद्योगास लागलों व त्याचें फळ हें आज लोकांपुढें मांडलें आहे. आतां यांत अजूनही कित्येक ठिकाणीं बरोबर ग्रंथ लागला नाहीं, तो जसजसा पुढें अधीक प्रती मिळतील तसतसा उत्तरोत्तर शुद्धच होत जाईल.

हा लेख संपविण्यापूर्वीं एका गोष्टीविषयीं उल्लेख करणें अवश्य आहे. मुद्रणकला आमचे देशांत सुरू होण्यापूर्वीं एकाद्या ग्रंथाची प्रत करून घेणें असल्यास फार सायास पडत. एकाद्या कोणास ग्रंथसंग्रह करणें असल्यास दूरदूरचे देशांतरीं जाऊन फार खर्च व मेहनत करून व अतिशय वेळ खर्चून व ज्यांचेकडे ग्रंथ असेल त्यांचें आर्जव करून प्रयंतरें मिळविणें भाग पडे. त्यावेळीं ज्यांकडे ग्रंथ असतील ते आपले ग्रंथ परत मिळणार नाहीं किंवा बिघडतील या धास्तीनें आपल्या संग्रहांतून काढून देण्यास फार भीत असत. व हें त्यांचें करणें त्यावेळीं योग्य होतें. पण तो काळ आतां राहिला नाहीं. सध्याच्या काळांत मुद्रणकलेच्या योगें प्रती करून घेणें सुलभ झालें आहे. तेव्हां यावेळीं जर असले ग्रंथ प्रसिद्ध केले नाहींत तर थोड्या काळांत ते नष्ट होण्याचा संभव आहे. तर आपलें ग्रंथभांडार गुप्त न ठेवितां होईल तितका प्रयत्न करून तें प्रसिद्ध करणें हें सर्वांचें कर्तव्य आहे. आमचाही उद्योग याच तऱ्हेचा आहे. तेव्हां वरील शास्त्रीद्वयाचें अनुकरण करून इतर लोक, ज्यांकडे असा ग्रंथसंग्रह असेल, त्यांहीं आह्मांस अशीच मदत केल्यास आमचा उद्योग अव्याहत राहील, व आमच्या हातून काव्यनाटकग्रंथप्रकाशरूप सेवा उत्तरोत्तर अधिक घडेल.

॥ अथ ॥

# ॥ अभिज्ञानशकुन्तलम् ॥

## ॥ प्रस्तावना ॥

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १ ॥

( नान्द्यन्ते )

**सूत्रधारः**—( नेपथ्याभिमुखमवलोक्य । ) आर्ये । यदि नेपथ्यविधानमवसितं तर्हीतस्तावदागम्यताम् ।

( प्रविश्य । )

**नटी**—अज्ज । इअह्मि । आणवेदु अज्जो को णओओ अणुचिट्ठीअदुत्ति ।

**सूत्रधारः**—आर्ये । अभिरूपभूयिष्ठा परिषदियम् । अद्य खलु कालिदासग्रथितवस्तुना नवेनाभिज्ञानशकुन्तलाख्येन नाटकेनोपस्थातव्यमस्माभिः । तत्प्रतिपात्रमाधीयतां यत्नः ।

**नटी**—सुविहिदप्पओअदाए अज्जस्स ण किंपि परिहाइस्सदि ।

**सूत्रधारः**—आर्ये । कथयामि ते भूतार्थम् ।

आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ २ ॥

---

१ आर्य । इयमस्मि । आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति ।
२ सुविहितप्रयोगतयार्यस्य न किमपि परिहास्यते ।

**नटी**—( सविनयम् । ) एंव्वं णेदम् । अणन्तरकरणिज्जं दाव अज्जो आणवेदु ।

**सूत्रधारः**—किमन्यदस्याः परिषदः श्रुतिप्रसादनतः ।

**नटी**—अंध कदमं उण उदुं अधिकरिअ गाइस्सं ।

**सूत्रधारः**—नन्विममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम् । संप्रति हि

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ३ ॥

**नटी**—तह । ( इति गायति । )

इसीसिचुम्बिआइं भमरेहिं सुउमारकेसरसिहाइं ।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं ॥ ४ ॥

**सूत्रधारः**—आर्ये । साधु गीतम् । अहो रागबद्धचित्तवृत्तिरालिखित इव सर्वतो रङ्गः । तदिदानीं कतमत्प्रकरणमाश्रित्यैनमाराधयामः ।

**नटी**—णं अज्जमिस्सेहिं पढमं एव्व आणत्तं अहिण्णाणसउन्दलं णाम अपुव्वं णाडअं पओएण अधिकरीअदुत्ति ।

**सूत्रधारः**—आर्ये । सम्यगनुबोधितोऽस्मि । अस्मिन्क्षणे विस्मृतं खलु मया । कुतः ।

तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥ ५ ॥

( इति निष्क्रान्तौ । )

## इति प्रस्तावना ।

---

१ एवं न्विदम् । अनन्तरकरणीयं तावदार्य आज्ञापयतु ।

२ अथ कतमं पुनर्ऋतुमधिकृत्य गास्यामि ।

३ तथा ।

ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेशरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ॥

४ नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशकुन्तलं नामापूर्वं नाटकं प्रयोगेणाधिक्रियतामिति ।

# ॥ प्रथमोऽङ्कः ॥

( ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च । )

सूतः—( राजानं मृगं चावलोक्य । ) आयुष्मन् ।

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥ १ ॥

राजा—सूत । दूरममुना सारङ्गेण वयमाकृष्टाः । अयं पुनरिदानीमपि

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ २ ॥

( सविस्मयम् । ) कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तोऽयं मृगः ।

सूतः—आयुष्मन् । उत्खातिनी भूमिरिति मया रश्मिसंयमनाद्रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः संवृत्तः । संप्रति हि समदेशवर्तिनस्ते न दुरासदो भविष्यति ।

राजा—तेन हि मुच्यन्तामभीशवः ।

सूतः—यथाज्ञापयत्यायुष्मान् । ( रथवेगं निरूप्य । ) आयुष्मन् । पश्य पश्य ।

मुक्तेषु रश्मिषु निरायतपूर्वकाया
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ ३ ॥

राजा—( सहर्षम् । ) सत्यमतीत्य हरितो हरींश्च वर्तन्ते वाजिनः। तथा हि ।

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसंधानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥ ४ ॥

सूत । पश्यैनं व्यापाद्यमानम् । ( इति शरसंधानं नाटयति । )

( नेपथ्ये । )

भो भो राजन् । आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

सूतः—( आकर्ण्यावलोक्य च । ) आयुष्मन् । अस्य खलु ते बाणपथवर्तिनः कृष्णसारस्यान्तरे तपस्विन उपस्थिताः ।

राजा—( ससंभ्रमम् । ) तेन हि प्रगृह्यन्तां वाजिनः ।

सूतः—तथा । ( इति रथं स्थापयति । )

( ततः प्रविशत्यात्मनातृतीयो वैखानसः । )

वैखानसः—( हस्तमुद्यम्य । ) राजन् । आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

न खलु न खलु बाणः सन्निपात्योऽयमस्मि-
न्मृदुनि मृगशरीरे पुष्पराशाविवाग्निः ।
क्व बत हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥ ५ ॥

तत्साधुकृतसंधानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥ ६ ॥

राजा—एष प्रतिसंहृतः । ( इति यथोक्तं करोति । )

वैखानसः—सदृशमेतत्पुरुवंशप्रदीपस्य भवतः ।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि ॥ ७ ॥

इतरौ—( बाहू उद्यम्य । ) सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि ।

राजा—( सप्रणामम् । ) प्रतिगृहीतम् ।

**वैखानसः**—राजन् । समिदाहरणाय प्रस्थिता वयम् । एष खलु कण्वस्य महर्षेरुपमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्यातिपातस्तत्प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः । अपि च ।

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥ ८ ॥

**राजा**—अपि सन्निहितोऽत्र कुलपतिः ।

**वैखानसः**—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

**राजा**—भवतु । तां द्रक्ष्यामि । सा खलु विदितभक्तिं मां महर्षेः करिष्यति ।

**वैखानसः**—साधयामस्तावत् । (इति सशिष्यो निष्क्रान्तः ।)

**राजा**—सूत । चोदयाश्वान् । पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । (इति भूयो रथवेगं निरूपयति ।)

**राजा**—(समन्तादवलोक्य ।) सूत । अकथितोऽपि ज्ञायत एव यथायमाभोगस्तपोवनस्येति ।

**सूतः**—कथमिव ।

**राजा**—किं न पश्यति भवान् । इह हि

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ ९ ॥

अपि च ।

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन ।

एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति ॥ १० ॥

सूतः—सर्वमुपपन्नम् ।

राजा—( स्तोकमन्तरं गत्वा । ) तपोवनवासिनामुपरोधो मा भूत् । अत्रैव तावद्रथं स्थापय यावदवतरामि ।

सूतः—धृताः प्रग्रहाः । अवतरत्वायुष्मान् ।

राजा—( अवतीर्य । ) सूत । विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम । इदं तावद्गृह्यताम् । ( इति सूतस्याभरणानि धनुश्चोपनीयार्पयति । ) सूत । यावदहमाश्रमवासिनः प्रत्यवेक्ष्योपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ।

सूतः—तथा । ( इति निष्क्रान्तः । )

राजा—( परिक्रम्यावलोक्य च । ) इदमाश्रमद्वारम् । यावत्प्रविशामि । ( प्रविश्य निमित्तं सूचयन् । )

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ ११ ॥

( नेपथ्ये । )

ईदो इदो सहीओ ।

राजा—( कर्णं दत्त्वा । ) अये । दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते । यावदत्र गच्छामि । ( परिक्रम्यावलोक्य च । ) अये । एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते । ( निरूप्य । ) अहो मधुरमासां दर्शनम् ।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ १२ ॥

यावदिमां छायामाश्रित्य प्रतिपालयामि । ( इति विलोकयन्स्थितः । )

---

१ इत इतः सख्यौ ।

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला । )

**शकुन्तला**—ईदो इदो सहीओ ।

**अनसूया**—हला सउन्दले । तुवत्तोबि तादकस्सबस्स अस्समरुक्खआ पिअदरेत्ति तक्केमि । जेण णोमालिआकुसुमपेलवाबि तुमं एदाणं आलवालपूरणे णिउत्ता ।

**शकुन्तला**—हला अणसूए । ण केवलं तादणिओओ एव्व । अत्थि मे सोदरसिणेहोबि एदेसु । ( इति वृक्षसेचनं निरूपयति । )

**राजा**—कथमियं सा कण्वदुहिता । असाधुदर्शी खलु तत्रभवान्काश्यपः । य इमामाश्रमधर्मे नियुङ्क्ते ।

इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥ १३ ॥

भवतु । पादपान्तरित एव विश्रब्धं तावदेनां पश्यामि । ( इति तथा करोति । )

**शकुन्तला**—सहि अणसूए । अदिपिणद्धेण बक्कलेण पिअंवदाए णिअन्तिदह्मि । सिदिलेहि दाव णं ।

**अनसूया**—तह । ( इति शिथिलयति । )

---

१ इत इतः सख्यौ ।

२ हला शकुन्तले । त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षाः प्रियतरा इति तर्कयामि । येन नवमालिकाकुसुमपेलवापि त्वमेतेषामालवालपूरणे नियुक्ता ।

३ हला अनसूये । न केवलं तातनियोग एव । अस्ति मे सोदरस्नेहोऽप्येतेषु ।

४ सखि अनसूये । अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रितास्मि । शिथिलय तावदेनम् ।

५ तथा ।

**प्रियंवदा**—(सहासम्।) [1]एत्थ पओहरवित्थारइत्तअं अत्तणो जोव्वणं उबालह। मं किं उबालम्भेसि।

**राजा**—सम्यगियमाह।

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना वल्कलेन।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्त्रोदरेण ॥ १४ ॥

अथवा। काममननुरूपमस्या वपुषो वल्कलम्। न पुनरलंकारश्रियं न पुष्यति। कुतः।

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ १५ ॥

**शकुन्तला**—(अग्रतोऽवलोक्य।) [2]एसो वादेरिदपल्लवङ्गुलीहिं तुवरेदि विअ मं केसररुक्खओ। जाव णं संभावेमि। (इति परिक्रामति।)

**प्रियंवदा**—[3]हला सउन्दले। एत्थ एव्व दाव मुहुत्तअं चिट्ठ।

**शकुन्तला**—[4]किंणिमित्तम्।

**प्रियंवदा**—[5]जावे तुए उबगदाए लदासणाहो विअ अअं केसररुक्खओ पडिभादि।

---

१ अत्र पयोधरविस्तारयितृकमात्मनो यौवनमुपालभस्व। मां किमुपालभसे।

२ एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केशरवृक्षकः। यावदेनं संभावयामि।

३ हला शकुन्तले। अत्रैव तावन्मुहूर्तं तिष्ठ।

४ किंनिमित्तम्।

५ यावत्त्वयोपगतया लतासनाथ इवायं केशरवृक्षकः प्रतिभाति।

**शकुन्तला**—अदो[1] क्खु पिअंवदासि तुमं ।

**राजा**—प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा । अस्याः खलु

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥ १६ ॥

**अनसूया**—हला[2] सउन्दले ! इअं सअंवरवहू सहआरस्स तुए किदणामहेआ वणजोसिणित्ति णोमालिआ । णं विसुमरिदासि ।

**शकुन्तला**—तदा[3] अत्ताणं पि विसुमरिस्सं । (लतामुपेत्यावलोक्य च ।) हला । रमणीए क्खु काले इमस्स लदापाअवमिहुणस्स वइअरो संवुत्तो । णवकुसुमजोव्वणा वणजोसिणी । बद्धपल्लवदाए उवभोअक्खमो सहआरो । (इति पश्यन्ती तिष्ठति ।)

**प्रियंवदा**—(सस्मितम् ।) अणसूए[4] । जाणासि किंणिमित्तं सउन्दला वणजोसिणिं अदिमेत्तं पेक्खदित्ति ।

**अनसूया**—ण[5] क्खु विभावेमि । कहेहि ।

**प्रियंवदा**—जह[6] वणजोसिणी अणुरूवेण पाअवेण संगदा । अवि णाम एव्वं अहं पि अत्तणो अणुरूवं वरं लहेअंत्ति ।

---

१ अतः खलु प्रियंवदासि त्वम् ।

२ हला शकुन्तले ! इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका । एनां विस्मृतासि ।

३ तदात्मानमपि विस्मरिष्यामि । हला । रमणीये खलु कालेऽस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः । नवकुसुमयौवना वनज्योत्स्ना । बद्धपल्लवतयोपभोगक्षमः सहकारः ।

४ अनसूये । जानासि किंनिमित्तं शकुन्तला वनज्योत्स्नामतिमात्रं प्रेक्षत इति ।

५ न खलु विभावयामि । कथय ।

६ यथा वनज्योत्स्नानुरूपेण पादपेन संगता । अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति ।

**शकुन्तला**—एसो णूणं तुह अत्तगदो मणोरहो । ( इति कलशमावर्जयति । )

**राजा**—अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् । अथवा कृतं संदेहेन ।

असंशयं क्षत्रपरिग्रहक्षमा
　　यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु
　　प्रमाणमन्तःकरणप्रवृत्तयः ॥ १७ ॥

तथापि तत्त्वत एवैनामुपलप्स्ये ।

**शकुन्तला**—( ससंभ्रमम् । ) अम्मो । सलिलसेअसंभमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ । ( इति भ्रमरबाधां नाटयति । )

**राजा**—( सस्पृहं विलोक्य । ) साधु बाधनमपि रमणीयमस्याः ।

यतो यतः षट्चरणोऽभिवर्त्तते
　　ततस्ततः प्रेरितलोललोचना ।
विवर्त्तितभ्रूरियमद्य शिक्षते
　　भयादकामापि हि दृष्टिविभ्रमम् ॥ १८ ॥

अपि च । ( सासूयमिव । )

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
　　रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
　　वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ १९ ॥

---

१ एष नूनं तवात्मगतो मनोरथः ।

२ अहो । सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते ।

**शकुन्तला**—णं एसो धिट्ठो विरमदि। अण्णदो गमिस्सं। (पदान्तरे स्थित्वा सदृष्टिक्षेपम्।) कहं इदोवि आअच्छदि। हला। परित्ताअध परित्ताअध मं इमिणा दुव्विणीदेण दुट्ठमहुअरेण अहिहूअमाणं।

**उभे**—(सस्मितम्।) [2] काओ वअं परित्तादुं। दुस्सन्दं अक्कन्द। राअरक्खिदाइं तवोवणाइं णाम।

**राजा**—अवसरोऽयमात्मानं प्रकाशयितुम्। न भेतव्यम्—(इत्यर्धोक्ते स्वगतम्।) राजभावस्त्वभिज्ञातो भवेत्। भवतु। एवं तावदभिधास्ये।

**शकुन्तला**—(पदान्तरे स्थित्वा।) [3] कहं इदोवि मं अणुसरदि।

**राजा**—(सत्वरमुपसृत्य।)

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु॥ २०॥

(सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः।)

**अनसूया**—[4] अज्ज। ण क्खु किंपि अच्चाहिदं। इअं णो पिअसही महुअरेण अहिहूअमाणा कादरीभूदा। (इति शकुन्तलां दर्शयति।)

**राजा**—(शकुन्तलाभिमुखो भूत्वा।) अपि तपो वर्धते।

(शकुन्तला साध्वसादवचना तिष्ठति।)

---

१ न एष धृष्टो विरमति। अन्यतो गमिष्यामि। कथमितोऽप्यागच्छति। हला। परित्रायध्वं परित्रायध्वं मामनेन दुर्विनीतेन दुष्टमधुकरेणाभिभूयमानाम्।

२ के आवां परित्रातुम्। दुष्यन्तमाक्रन्द। राजरक्षितानि तपोवनानि नाम।

३ कथमितोऽपि मामनुसरति।

४ आर्य। न खलु किमप्यत्याहितम्। इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता।

अनसूया—दाणिं अदिधिविसेसलाहेण । हला सउन्दले । गच्छ उडअं । फलमिस्सं अग्घं उवहर । इदं पादोदअं भविस्सदि ।

राजा—भवतीनां सूनृतयैव गिरा कृतमातिथ्यम् ।

प्रियंवदा—तेणं हि इमास्सिं पच्छाअसीअलाए सत्तवणवेदिआए मुहुत्तअं उवविसिअ परिस्समविणोदं करेदु अज्जो ।

राजा—नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः ।

अनसूया—हला सउन्दले । उइदं णो पज्जुवासणं अदिधीणं । एत्थ उवविसह्म । (इति सर्वे उपविशन्ति ।)

शकुन्तला—(आत्मगतम् ।) किं णु क्खु इमं जणं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीअह्मि संवुत्ता ।

राजा—(सर्वा विलोक्य ।) अहो समवयोरूपरमणीयं भवतीनां सौहार्दम् ।

प्रियंवदा—(जनान्तिकम् ।) अणसूए । को णु क्खु एसो । चउरगम्भीराकिदी महुरं आलवन्तो पहाववन्दो विअ लक्खीअदि ।

अनसूया—सहि । ममवि अत्थि कोदूहलं । पुच्छिस्सं दाव णं ।

---

१ इदानीमतिथिविशेषलाभेन । हला शकुन्तले । गच्छोटजम् । फलमिश्रमर्घमुपहर । इदं पादोदकं भविष्यति ।

२ तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः ।

३ हला शकुन्तले । उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः ।

४ किं नु खल्विमं जनं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ।

५ अनसूये । को नु खल्वेषः । चतुरगम्भीराकृतिर्मधुरमालपन्प्रभाववानिव लक्ष्यते ।

६ सखि । ममाप्यस्ति कौतूहलम् । प्रक्ष्यामि तावदेनम् । आर्यस्य मधुरालापजनितो विश्वासो मां मन्त्रयति । कतम आर्येण राजर्षिवंशोऽलं-

( प्रकाशम् । ) अज्जस्स महुरालाबजणिदो विस्सासो मं मन्ताबेदि । कदमो अज्जेण राएसिवंसो अलंकरीअदि । कदमो वा विरहपज्जुस्सुअजणो किदो देसो । किंणिमित्तं वा सुउमारदरोवि तबोवणगमणपरिस्समस्स अत्ता पदं उबणीदो ।

शकुन्तला—( आत्मगतम् । ) हिअअ[1] । मा उत्तम्म । एसा तुए चिन्दिदं अणसूआ मन्तेदि ।

राजा—( आत्मगतम् । ) कथमिदानीमात्मानं निवेदयामि । कथं वात्मापहारं करोमि । भवतु । एवं तावदेनां वक्ष्ये । ( प्रकाशम् । ) भवति । यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।

अनसूया—सणाहा[2] दाणिं धम्मचारिणो ।

( शकुन्तला शृङ्गारलज्जां निरूपयति । )

सख्यौ—( उभयोराकारं विदित्वा जनान्तिकम् । ) हला[3] सउन्दले । जइ एत्थ अज्ज तादो सण्णिहिदो भवे ।

शकुन्तला—( सरोषम् । ) तदो[4] किं भवे ।

सख्यौ—इमं[5] जीविदसव्वस्सेणबि अदिधिविसेसं किदत्थं करिस्सदि ।

शकुन्तला—तुझे[6] अबेध । किंपि हिअए करिअ मन्तेध । ण वो वअणं सुणिस्सं ।

---

क्रियते । कतमो वा विरहपर्युत्सुकजनः कृतो देशः । किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः ।

१ हृदय । मोत्ताम्य । एषा त्वया चिन्तितमनसूया मन्त्रयते ।

२ सनाथा इदानीं धर्मचारिणः ।

३ हला शकुन्तले । यद्यत्राद्य तातः सन्निहितो भवेत् ।

४ ततः किं भवेत् ।

५ इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति ।

६ युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न वां वचनं श्रोष्यामि ।

भव हृदय साभिलाषं संप्रति संदेहनिर्णयो जातः ।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ २३ ॥

शकुन्तला—( सरोषमिव । ) [1]अणसूए । अहं गमिस्सं ।

अनसूया—[2]किंणिमित्तं ।

शकुन्तला—[3]ईमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवेदइस्सं ।

अनसूया—[4]सहि । ण जुत्तं दे अकिदसक्कारं अदिहिविसेसं विसज्जिअ सच्छन्ददो गमणं ।

( शकुन्तला न किंचिदुक्त्वा प्रस्थितैव । )

राजा—( ग्रहीतुमिच्छन्निगृह्यात्मानमात्मगतम् । ) अहो चेष्टाप्रतिरूपिका कामिनो मनोवृत्तिः । अहं हि

अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ २४ ॥

प्रियंवदा—( शकुन्तलां निरुध्य । ) [5]हला । ण दे जुत्तं गन्तुं ।

शकुन्तला—( सभ्रूभङ्गम् । ) [6]किंणिमित्तं ।

प्रियंवदा—[7]रुक्खसेअणाइं दुवे धारेसि मे । एहि दाव । अत्ताणं मोचिअ तदो गमिस्ससि । ( इति बलादेनां निवर्तयति । )

राजा—भद्रे । वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये ।

---

१ अनसूये । अहं गमिष्यामि ।

२ किंनिमित्तम् ।

३ इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि ।

४ सखि । न युक्तं तेऽकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् ।

५ हला । न ते युक्तं गन्तुम् ।

६ किंनिमित्तम् ।

७ वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि ।

तथा ह्यस्याः

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्द्धजाः॥२५॥

तदहमेनामनृणां करोमि । ( इत्यङ्गुलीयं दातुमिच्छति । )

( उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः । )

**राजा**—अलमस्मानन्यथा संभाव्य । राज्ञः प्रतिग्रहोऽयमिति राजपुरुषं मामवगच्छथ ।

**प्रियंवदा**—तेणं हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीविओअं । अज्जस्स वअणेण अणिरिणा दाणिं एसा । ( किंचिद्विहस्य । ) हला सउन्दले । मोइदासि अणुअम्पिणा अज्जेण अहवा महाराएण । गच्छ दाणिं ।

**शकुन्तला**—( आत्मगतम् । ) जइ अत्तणो पहविस्सं । ( प्रकाशम् । ) का तुमं विसज्जिदव्वस्स रुन्धिदव्वस्स वा ।

**राजा**—( शकुन्तलां विलोक्यात्मगतम् । ) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात् । अथवा लब्धावकाशा मे प्रार्थना । कुतः ।

वाचं न मिश्रयति यद्यपि मे वचोभिः
कर्णं ददात्यभिमुखं मयि भाषमाणे ।
कामं न तिष्ठति मदाननसंमुखी सा
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २६ ॥

---

१ तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगम् । आर्यस्य वचनेनानृणेदानीमेषा । हला शकुन्तले । मोचितास्यनुकम्पिनार्येणाथवा महाराजेन । गच्छेदानीम् ।

२ यद्यात्मनः प्रभविष्यामि । का त्वं विस्रष्टव्यस्य रोद्धव्यस्य वा ।

( नेपथ्ये । )

भो भोस्तपस्विनः । सन्निहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

तुरगखुरहतस्तथा हि रेणु-
विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥ २७ ॥

अपि च ।

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसंजातपाशः ।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥ २८ ॥

( सर्वाः कर्णे दत्त्वा किंचिदिव संभ्रान्ताः । )

**राजा**—( आत्मगतम् । ) अहो धिक् पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु । प्रतिगमिष्यामस्तावत् ।

**सख्यौ**—अंज्ज । इमिणा आरण्णअवुत्तन्तेण पज्जाउलह्म । अणुजाणाहि णो उडअगमणस्स ।

**राजा**—( ससंभ्रमम् । ) गच्छन्तु भवत्यः । वयमप्याश्रमपीडा यथा न भविष्यति तथा प्रयतिष्यामहे ।

( सर्वे उत्तिष्ठन्ति । )

**सख्यौ**—अंज्ज । असंभाविदादिहिसक्कारं भूओवि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णाविदुं ।

---

१ आर्य । अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटजगमनाय ।

२ आर्य । असंभावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जामह आर्यं विज्ञापयितुम् ।

राजा—मा मैवम्। दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि ।

शकुन्तला—अणसूए । अहिणवकुससूईए परिक्खदं मे चलणं । कुरबअसाहापरिलग्गं च वक्कलं । दाव परिपालेध मं जाव णं मोआवेमि । ( इति राजानमेवावलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता । )

राजा—मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान्समेत्य नातिदूरे तपोवनस्य निवेशयामि । न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम् । मम हि

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ २९ ॥

( इति निष्क्रान्ताः सर्वे । )

इति प्रथमोऽङ्कः ।

---

## ॥ द्वितीयोऽङ्कः ॥

( ततः प्रविशति विषण्णो विदूषकः । )

विदूषकः—( निःश्वस्य । ) भो दिट्ठं । एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णोह्मि । अअं मिओ अअं वराहो

---

१ अनसूये । अभिनवकुशसूच्या परिक्षतं मे चरणम् । कुरबकशाखापरिलग्नं च वल्कलम् । तावत्परिपालयत मां यावदेतन्मोचयामि ।

२ भो दिष्टम् । एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि । अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्यान्हेऽपि ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्यतेऽटव्या अटवीम् । पत्रसंकरकषायाणि कटूनि गिरिनदीजलानि पीयन्ते । अनियतवेलं शूल्यमांसभूयिष्ठ आहारोऽश्यते । तुरगानुधावनकण्डितसंधे रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याःपुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि । इयतेदानीमपि पीडा न निष्क्रामति । ततो गण्डस्योपरि पिटका

अअं सद्दूलोत्ति मज्झण्णेवि गिह्मविरलपाअवच्छाआसु वणराईसु आहिण्डीअदि अडवीदो अडविं । पत्तसंकरकसाआणि कडुआणि गिरिणईजलाणि पीअन्ति । अणिअदवेलं सुल्लमंसभूइट्ठो आहारो अण्हीअदि । तुरगाणुधावणकण्डिदसंधिणो रत्तिम्मिवि णिकामं सइदव्वं णात्थि । तदो महन्ते एव्व पच्चूसे दासीएपुत्तेहिं सउणिलुद्धएहिं वणग्गहणकोलाहलेण पडिबोधिदोह्मि । एत्तएण दाणिंपि पीडा ण णिक्कमदि । तदो गण्डस्स उवरि पिण्डिआ संवुत्ता । हिओ किल अह्मेसु ओहीणेसु तत्तभवदो मिआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउन्दला णाम मम अधण्णदाए दंसिदा । संपदं णअरगमणस्स मणं कहंपि ण करेदि । अज्जवि तस्स तं एव्व चिन्तअन्तस्स अच्छीसु पभादं आसि । का गदी । जाव णं किदाचारपरिकम्मं पेक्खामि । ( इति परिक्रम्यावलोक्य च । ) एसो बाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं पडिवुदो इदो एव्व आअच्छदि पिअवअस्सो । भोदु । अङ्गभङ्गविअलो विअ भविअ चिट्ठिस्सं । जइ एव्वंपि णाम विस्समं लहेअं । ( इति दण्डकाष्ठमवलम्ब्य स्थितः । )

( ततः प्रविशति यथानिर्दिष्टपरिवारो राजा । )

**राजा**—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥

---

संवृत्ता । ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला नाम ममाधन्यतया दर्शिता । सांप्रतं नगरगमनाय मनः कथमपि न करोति । अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत् । का गतिः । यावदेनं कृताचारपरिकर्माणं प्रेक्षे । एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः । भवतु । अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रमं लभेय ।

( स्मितं कृत्वा। ) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते। तद्यथा।

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया
 यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।
मा गा इत्यवरुद्धया यदपि सा सासूयमुक्ता सखी
 सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति॥ २॥

विदूषकः—( तथास्थित एव। ) [1]भो वअस्स। ण मे हत्था पसरन्ति। ता वाआमेत्तेण जआवीअसि।

राजा—कुतोऽयं गात्रोपघातः।

विदूषकः—[2]कुदो किल सअं अच्छी आउलीकरिअ अस्सुकारणं पुच्छेसि।

राजा—न खल्ववगच्छामि। भिन्नार्थमभिधीयताम्।

विदूषकः—[3]भो वअस्स। जं वेदसो खुज्जलीलं विडम्बादे तं किं अत्तणो पहावेण णं णईवेअस्स।

राजा—नदीवेगस्तत्र कारणम्।

विदूषकः—[4]ममवि भवं।

राजा—कथमिव।

विदूषकः—[5]एव्वं राअकज्जाणि उज्झिअ एआरिसे अमाणुस-

---

१ भो वयस्य। न मे हस्तौ प्रसरतः। तद्वाचामात्रेण जाप्यसे।

२ कुतः किल स्वयमक्षिणी आकुलीकृत्याश्रुकारणं पृच्छसि।

३ भो वयस्य। यद्वेतसः कुब्जलीलां विडम्बयति तत्किमात्मनः प्रभावेण ननु नदीवेगस्य।

४ ममापि भवान्।

५ एवं राजकार्याण्युज्झित्वैतादृशेऽमानुषसंचार आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम्। यत्सत्यं प्रत्यहं श्वापदानुसरणैः संक्षोभितसंधिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः। तत्प्रसादयिष्ये विसृष्टुं मामेकाहमपि तावद्विश्रमितुम्।

संचारे आउलप्पदेसे वणचरवुत्तिणा तुए होदव्वं । जं सच्चं पच्चहं सावदाणुसरणेहिं संखोहिअसंधिबन्धाणं मम गत्ताणं अणीसोह्मि संवुत्तो । ता पसादइस्सं विसज्जिदुं मं एक्काहंपि दाव विस्समिदुं ।

राजा—(स्वगतम् ।) अयं चैवमाह । ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः । कुतः ।

न नमयितुमधिज्यमस्मि शक्तो
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः ॥ ३ ॥

विदूषकः—(राज्ञो मुखं विलोक्य ।) [1]अत्तभवं किंपि हिअए करिअ मन्तेदि । अरण्णे मए रुदिअं आसि ।

राजा—(सस्मितम् ।) किमन्यत् । अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदूषकः—[2]चिरं जीव । (इति गन्तुमिच्छति ।)

राजा—वयस्य । तिष्ठ । शृणु सावशेषं मे वचः ।

विदूषकः—[3]आणवेदु भवं ।

राजा—विश्रान्तेन भवता ममाप्येकस्मिन्ननायासे कर्मणि सहायेन भवितव्यम् ।

विदूषकः—[4]किं मोदअखज्जिआए ।

राजा—यत्र वक्ष्यामि ।

विदूषकः—[5]गेहीदो खणः ।

---

१ अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितमासीत् ।
२ चिरं जीव ।
३ आज्ञापयतु भवान् ।
४ किं मोदकखादिकायाम् ।
५ गृहीतः क्षणः ।

**राजा**—कः कोऽत्र भोः ।

**दौवारिकः**—( प्रविश्य । ) [1]आणवेदु भट्टा ।

**राजा**—रैवतक । सेनापतिस्तावदाहूयताम् ।

**दौवारिकः**—[2]तह । ( इति निष्क्रम्य सेनापतिना सह पुनः प्रविश्य । ) एसो अण्णाबणुक्कण्ठो भट्टा इदो दिण्णदिट्ठी एव्व चिट्ठदि । उबसप्पदु अज्जो ।

**सेनापतिः**—( राजानमवलोक्य । ) दृष्टदोषापि स्वामिनि मृगया केवलं गुण एव संवृत्ता । तथा हि देवः

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु क्लेशलेशैरभिन्नम् ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं cf. p. 107 cf. p. 86.
गिरिचर इव नागः प्राणसारं बिभर्त्ति ॥ ४ ॥

( उपेत्य । ) जयतु स्वामी । गृहीतश्वापदमरण्यम् । किमिति स्थीयते ।

**राजा**—मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माठव्येन ।

**सेनापतिः**—( जनान्तिकम् । ) सखे । स्थिरप्रतिबन्धो भव । अहं तावत्स्वामिनश्चित्तवृत्तिमनुवर्त्तिष्ये । ( प्रकाशम् । ) प्रलपत्येष वैधेयः । ननु प्रभुरेव निदर्शनम् । पश्यतु देवः ।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ५ ॥

**विदूषकः**—( सरोषम् । ) [3]अवेहि रे उच्छाहहेतुअ । अत्तभवं

---

१ आज्ञापयतु भर्त्ता ।

२ तथा । एष आज्ञापनोत्कण्ठो भर्त्तेतो दत्तदृष्टिरेव तिष्ठति । उपसर्पत्वार्यः ।

३ अपेहि रे उत्साहहेतुक । अत्रभवान्प्रकृतिमापन्नः । त्वं तावदटव्या अटवीमाहिण्डन्नरनासिकालोलुपस्य जीर्णर्क्षस्य कस्यापि मुखे पतिष्यसि ।

पकिर्दि आपण्णो । तुमं दाव अडवीदो अडविं आहिण्डन्तो णरणासिआलोलुबस्स जिण्णरिच्छस्स कस्सबि मुहे पडिस्ससि ।

राजा—भद्र सेनापते । आश्रमसन्निकृष्टस्थिताः स्मः । अतस्ते वचो नाभिनन्दामि । अद्य तावद्

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विश्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६ ॥

सेनापतिः—यत्प्रभविष्णवे रोचते ।

राजा—तेन हि निवर्त्तय पूर्वगतान्वनग्राहिणः । यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः । पश्य ।

शमप्रधानेषु तपोधनेषु
गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजोऽभिभवाद्वमन्ति ॥ ७ ॥

सेनापतिः—यदाज्ञापयति स्वामी ।

विदूषकः—[1]गच्छ भो दासीएपुत्त । धंसिदो दे उच्छाहवुत्तन्तो ।

( निष्क्रान्तः सेनापतिः । )

राजा—( परिजनं विलोक्य । ) अपनयन्तु भवत्यो मृगयावेशम् । रैवतक । त्वमपि स्वं नियोगमशून्यं कुरु ।

परिजनः—[2]जं देवो आणवेदि । ( इति निष्क्रान्तः । )

विदूषकः—[3]किदं भवदा दाणिं णिम्मच्छिअं । संपदं इमस्सि

---

१ गच्छ भो दास्याःपुत्र । ध्वंसितस्त उत्साहवृत्तान्तः ।
२ यद्देव आज्ञापयति ।
३ कृतं भवतेदानीं निर्मक्षिकम् । सांप्रतमस्मिन्पादपच्छायाविरचित-

पादबच्छाआविरइदविदाणसणाहे सिलाअले उववेसदु भवं। जाव अहंपि सुहासीणो होमि।

राजा—गच्छाग्रतः।

विदूषकः—[१]एदु भवं।

(इत्युभौ परिक्रम्योपविष्टौ।)

राजा—माठव्य। अनवाप्तचक्षुःफलोऽसि। येन त्वया द्रष्टव्यानां परं न दृष्टम्।

विदूषकः—[२]णं भवं अग्गदो मे वट्टदि।

राजा—सर्वः कान्तमात्मीयं पश्यति। अहं तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि।

विदूषकः—(स्वगतम्।) होदु[३]। से अवसरं ण दाइस्सं। (प्रकाशम्।) भो वअस्स। जइ सा तवस्सिकण्णआ अणब्भत्थणीआ ता किं ताए दिट्ठआए।

राजा—सखे। न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्त्तते।

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम्।
अर्कस्योपरि शिथिलं च्युतमिव नवमल्लिकाकुसुमम्॥ ८॥

विदूषकः—(विहस्य।) [४]जह कस्सवि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिडिआए अहिलासो भवे। तह अन्तेउरइत्थिआरअणपरिभाविणो भवदो इअं अब्भत्थणा।

---

वितानसनाथे शिलातल उपविशतु भवान्। यावदहमपि सुखासीनो भवामि।

१ एतु भवान्।

२ ननु भवानग्रतो मे वर्त्तते।

३ भवतु। अस्यावसरं न दास्यामि। भो वयस्य। यदि सा तपस्विकन्यकानभ्यर्थनीया तदा किं तया दृष्टया।

४ यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिडिकायामभिलाषो भवेत्। तथान्तःपुरस्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना।

राजा—न तावदेनां पश्यसि येनैवमवादीः ।

विदूषकः—[1]तं क्खु रमणिज्जं जं भवदोबि विह्मअं उप्पादेदि ।

राजा—वयस्य । किं बहुना ।

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

विदूषकः—[2]जइ एव्वं पच्चादेसो दाणिं रूववदीणं ।

राजा—इदं च मे मनसि वर्त्तते ।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥१०॥

विदूषकः—[3]तेण हि लहु परित्ताअदु णं भवं । मा कस्सबि तबस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे पडिस्सदि ।

राजा—परवती खलु तत्रभवती । न च सन्निहितोऽत्र गुरुजनः ।

विदूषकः—[4]अध भवन्तं अन्तरेण कीदिसो से दिट्ठिराओ ।

राजा—निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि तु

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकृतोदयम् ।

---

१ तत्खलु रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति ।

२ यद्येवं प्रत्यादेश इदानीं रूपवतीनाम् ।

३ तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते पतिष्यति ।

४ अथ भवन्तमन्तरेण कीदृशोऽस्या दृष्टिरागः ।

विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥ ११ ॥

**विदूषकः**—[1]णं क्खु दिट्ठमेत्तस्स तुह अङ्कं आरोहदि ।

**राजा**—मिथःप्रस्थाने पुनः शालीनतयापि ममाविष्कृतो भावस्तत्रभवत्या । तथा हि ।

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

**विदूषकः**—[2]तेण हि गहीदपाहेओ होहि । किदं तुए उववणं तवोवणंत्ति पेक्खामि ।

**राजा**—सखे । तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनापदेशेन पुनराश्रमपदं गच्छामः ।

**विदूषकः**—[3]को अवरो अवदेसो । णं भवं राआ ।

**राजा**—ततः किम् ।

**विदूषकः**—[4]णीवारच्छट्ठभाअं अह्माणं उवहरन्तुत्ति ।

**राजा**—मूर्ख । अन्यमेव भागधेयमेते तपस्विनो निर्वपन्ति । यो रत्नराशीनपि विहायाभिनन्द्यते । पश्य ।

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥

( नेपथ्ये ।)

हन्त सिद्धार्थौ स्वः ।

---

१ ननु खलु दृष्टमात्रस्य तवाङ्कमारोहति ।

२ तेन हि गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति प्रेक्षे ।

३ कोऽपरोऽपदेशः । ननु भवान्राजा ।

४ नीवारषष्ठभागमस्माकमुपहरन्त्विति ।

**राजा**—( कर्ण दत्वा । ) अये । धीरप्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् ।

( प्रविश्य । )

**दौवारिकः**—जेदु[1] जेदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उबट्ठिदा ।

**राजा**—तेन ह्यविलम्बितं प्रवेशय तौ ।

**दौवारिकः**—ऐसो[2] पवेसेमि । ( इति निष्क्रम्य ऋषिकुमाराभ्यां सह प्रविश्य । ) इदो इदो भवन्ता ।

( उभौ राजानं विलोकयतः । )

**प्रथमः**—अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः । अथवा । उपपन्नमेतदस्मिन्नृषिकल्पे राजनि । कुतः ।

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १४ ॥

**द्वितीयः**—गौतम । अयं स बलभित्सखो दुष्यन्तः ।

**प्रथमः**—अथ किम् ।

**द्वितीयः**—तेन हि

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १५ ॥

**उभौ**—( उपगम्य । ) विजयस्व राजन् ।

---

१ जयतु जयतु भर्त्ता । एतौ द्वौ ऋषिकुमारकौ प्रतिहारभूमिमुपस्थितौ ।

२ एष प्रवेशयामि । इत इतो भवन्तौ ।

राजा—( आसनादुत्थाय । ) अभिवादये भवन्तौ ।

उभौ—स्वस्ति भवते । ( इति फलान्युपहरतः । )

राजा—( सप्रणामं परिगृह्य । ) आज्ञामिच्छामि ।

उभौ—विदितो भवानाश्रमसदामिहस्थः । तेन भवन्तं प्रार्थयन्ते ।

राजा—किमाज्ञापयन्ति ।

उभौ—तत्रभवतः कण्वस्य महर्षेरसान्निध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

राजा—अनुगृहीतोऽस्मि ।

विदूषकः—( अपवार्य । ) एसा[1] दाणिं अणुऊला दे अब्भत्थणा ।

राजा—( स्मितं कृत्वा । ) रैवतक । मद्वचनादुच्यतां सारथिः । सबाणासनं रथमुपस्थापयेति ।

दौवारिकः—[2]जं देवो आणवेदि । ( इति निष्क्रान्तः । )

उभौ—( सहर्षम् । )

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ १६ ॥

राजा—( सप्रणामम् । ) गच्छतां पुरो भवन्तौ । अहमप्यनुपदमागत एव ।

उभौ—विजयस्व । ( इति निष्क्रान्तौ । )

राजा—माठव्य । अप्यस्ति शकुन्तलादर्शनकुतूहलम् ।

विदूषकः—[3]पढमं सपरिवाहं आसि । दाणिं रक्खसवुत्तन्तेण बिन्दूवि णावसेसिदो ।

---

१ एषेदानीमनुकूला तेऽभ्यर्थना ।

२ यद्देव आज्ञापयति ।

३ प्रथमं सपरिवाहमासीत् । इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः ।

**राजा**—मा भैषीः । ननु मत्समीपे वर्त्तिष्यसे ।

**विदूषकः**—ऐस तव चक्करक्खीभूदोह्मि ।

( प्रविश्य । )

**दौवारिकः**—सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि । एस उण णअरादो देवीणं आणत्तिहरओ करभओ आअदो ।

**राजा**—( सादरम् । ) किमम्बाभिः प्रेषितः ।

**दौवारिकः**—अह इं ।

**राजा**—ननु प्रवेश्यताम् ।

**दौवारिकः**—तह । ( इति निष्क्रम्य करभकेण सह प्रविश्य । ) एसो भट्टा । उबसप्प ।

**करभकः**—जेदु जेदु भट्टा । देवी आणवेदि । आआमिणि चउत्थदिअहे पुत्तपिण्डपालणो णाम उबवासो भविस्सदि । तहिं दीहाउणा अवस्सं अह्मे संभावइदव्वत्ति ।

**राजा**—इतस्तपस्विकार्यम् । इतो गुरुजनाज्ञा । द्वयमप्यनतिक्रमणीयम् । किमत्र प्रतिविधेयम् ।

**विदूषकः**—तिसँङ्कू विअ अन्तरा चिट्ठ ।

**राजा**—सत्यमाकुलीभूतोऽस्मि ।

---

१ एष तव चक्ररक्षीभूतोऽस्मि ।

२ सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः ।

३ अथ किम् ।

४ तथा । एष भर्त्ता । उपसर्प ।

५ जयतु जयतु भर्त्ता । देव्याज्ञापयति । आगामिनि चतुर्थदिवसे पुत्रपिण्डपालनो नामोपवासो भविष्यति । तत्र दीर्घायुषावश्यं वयं संभावयितव्या इति ।

६ त्रिशङ्कुरिवान्तरा तिष्ठ ।

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैलैः स्रोतः स्रोतोवहं यथा ॥ १७ ॥

( विचिन्त्य । ) सखे त्वमम्बया पुत्र इति प्रतिगृहीतः । अतो भवानितः प्रतिनिवृत्य मां तपस्विकार्यव्यग्रमानसमावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति ।

**विदूषकः**—[1]णं क्खु मं रक्खोभीरुअं गणेसि ।

**राजा**—( सस्मितम् । ) भो महाब्राह्मण । कथमेतद्भवति संभाव्यते ।

**विदूषकः**—[2]जह राआणुएण गन्तव्वं तह गमिस्सं ।

**राजा**—ननु तपोवनोपरोधः परिहरणीय इति सर्वाननुयात्रिकांस्त्वयैव सह प्रस्थापयामि ।

**विदूषकः**—( सगर्वम् । ) [3]तेण हि जुवराओह्मि दाणिं संवुत्तो ।

**राजा**—( आत्मगतम् । ) चपलोऽयं बटुः । कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत् । भवतु । एनमेवं वक्ष्ये । ( विदूषकं हस्ते गृहीत्वा । प्रकाशम् । ) वयस्य । ऋषिगौरवादाश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यकायां शकुन्तलायां ममाभिलाषः । पश्य ।

क्व वयं क्व परोक्षमन्मथो
मृगशावैः सममेधितो जनः ।
परिहासविजल्पितं सखे
परमार्थेन न गृह्यतां वचः ॥ १८ ॥

**विदूषकः**—[4]अह इं ।

( इति निष्क्रान्ताः सर्वे । )

## इति द्वितीयोऽङ्कः ।

---

१ ननु खलु मां रक्षोभीरुकं गणयसि ।
२ यथा राजानुजेन गन्तव्यं तथा गमिष्यामि ।
३ तेन हि युवराजोऽस्मीदानीं संवृत्तः ।
४ अथ किम् ।

## ॥ विष्कम्भः ॥

( ततः प्रविशति कुशानादाय यजमानशिष्यः । )

**शिष्यः**—अहो महाप्रभावो राजा दुष्यन्तः । येन प्रविष्टमात्र एवाश्रमं तत्रभवति निरुपप्लवानि नः कर्माणि संवृत्तानि ।

का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।
हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥ १ ॥

यावदिमान्वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य उपहरामि । ( परिक्रम्यावलोक्य च । आकाशे । ) प्रियंवदे । कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते । ( श्रुतिमभिनीय । ) किं ब्रवीषि । आतपलङ्घनाद्बलवदस्वस्था शकुन्तला । तस्याः शरीरनिर्वापणायेति । प्रियंवदे । यत्नादुपचर्यताम् । सा हि तत्रभवतः कुलपतेरुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि । ( इति निष्क्रान्तः । )

इति विष्कम्भः ।

---

## ॥ तृतीयोऽङ्कः ॥

(ततः प्रविशति समदनावस्थो राजा ।)

**राजा**—( सचिन्तं निःश्वस्य । )

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ॥ १ ॥

भगवन्कुसुमायुध । त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः । कुतः ।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ २ ॥

भगवन्कामदेव । न ते मय्यनुक्रोशः । ( मदनबाधां निरूप्य । ) कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत् । आं ज्ञातम् ।

अद्यापि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।
त्वमन्यथा मन्मथ मद्विधानां
भस्मावशेषः कथमित्थमुष्णः ॥ ३ ॥

अथवा ।

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ ४ ॥

भगवन्कंदर्प । एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः ।

वृथैव संकल्पशतैरजस्र-
मनङ्ग नीतोऽसि मया विवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे
मय्येव युक्तस्तव बाणमोक्षः ॥ ५ ॥

( सखेदं परिक्रम्य । ) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि । ( निःश्वस्य । ) किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विष्यामि । (सूर्यमवलोक्य ।) इमामुग्रातपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि । ( परिक्रम्यावलोक्य च । ) अनया बालपादपवीथ्या सुतनुरचिरं गतेति तर्कयामि । कुतः ।

संमीलन्ति न तावद्बन्धनकोषास्तयावचितपुष्पाः ।
क्षीरस्निग्धाश्चामी दृश्यन्ते किशलयच्छेदाः ॥ ६ ॥

( स्पर्शं रूपयित्वा । ) अहो प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरंगाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ७ ॥

( परिक्रम्यावलोक्य च । ) अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे सन्निहितया तया भवितव्यम् । तथा हि । ( अधो विलोक्य । )

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ८ ॥

यावद्विटपान्तरेणावलोकयामि । ( परिक्रम्य तथा कृत्वा । सहर्षम् । ) अये लब्धं नेत्रनिर्वाणम् । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते । भवतु । श्रोष्याम्यासां विश्रम्भकथितानि । ( इति विलोकयन्स्थितः । )

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला । )

**सख्यौ**—( उपवीज्य । सस्नेहम् । ) हला[1] सउन्दले । अवि सुहाआदि दे णलिणीपत्तवादो ।

**शकुन्तला**—किं[2] वीजअन्ति मं सहीओ ।

( सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः । )

**राजा**—बलवदस्वस्थशरीरा शकुन्तला दृश्यते । ( सवितर्कम् । ) तत्किमयमातपदोषः स्यात् । उत यथा मे मनसि वर्तते । ( साभिलाषं निर्वर्ण्य । ) अथवा कृतं संदेहेन ।

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि रमणीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ९ ॥

**प्रियंवदा**—( जनान्तिकम् । ) अणसूए[3] । तस्स राएसिणो पढ-

---

१ हला शकुन्तले । अपि सुखायते ते नलिनीपत्रवातः ।
२ किं वीजयतो मां सख्यौ ।
३ अनसूये । तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खल्वस्यास्तन्निमित्तोऽयमातङ्को भवेत् ।

मदंसणादो आरहिअ पज्जुस्सुआ विअ सउन्दला । किं णु क्खु से तण्णिमित्तो अअं आतङ्को भवे ।

**अनसूया**—सहि । ममवि ईदिसी आसङ्का हिअअस्स । होदु । पुच्छिस्सं दाव णं । (प्रकाशम् ।) सहि । पुच्छिदव्वासि किंपि । बलिअं क्खु दे संदावो ।

**शकुन्तला**—(पूर्वार्धेन शयनादुत्थाय ।) हेला । किं वत्तुकामासि ।

**अनसूया**—हला सउन्दले । अणब्भन्तरा खु अह्मे मदणगदस्स वुत्तन्तस्स । किंदु जादिसी इदिहासणिबन्धेसु कामअमाणाणं अवत्था सुणीअदि तादिसिं दे पेक्खामि । कहेहि । किंणिमित्तं दे संदावो । विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स ।

**राजा**—अनसूययापि मदीयस्तर्कोऽवगतः ।

**शकुन्तला**—(आत्मगतम् ।) बलिअं क्खु मे अहिणिवेसो । सहसा एदाणं ण सक्कणोमि णिवेदिदुं ।

**प्रियंवदा**—सहि सउन्दले । सुट्ठु एसा भणादि । किं अत्तणो आतङ्कं उवेक्खसि । अणुदिअहं क्खु परिहीअसि अङ्गेहिं । केवलं लावण्णमई छाआ तुमं ण मुञ्चदि ।

---

१ सखि । ममापीदृश्याशङ्का हृदयस्य । भवतु । प्रक्ष्यामि तावदेनाम् । सखि । प्रष्टव्यासि किमपि । बलीयान्खलु ते संतापः ।

२ हला । किं वक्तुकामासि ।

३ हला शकुन्तले । अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु यादृशीतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते तादृशीं ते प्रेक्षे । कथय । किंनिमित्तं ते संतापः । विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतिकारस्य ।

४ बलीयान्खलु मेऽभिनिवेशः । सहसैतयोर्न शक्नोमि निवेदितुम् ।

५ सखि शकुन्तले । सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपेक्षसे । अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति ।

**राजा**—अवितथमाह प्रियंवदा । तथा हि ।

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥१०॥

**शकुन्तला**—[1]सहि । कस्स वा अण्णस्स कहइस्सं । किंदु आआसइत्तिआ दाणिं वो भविस्सं ।

**उभे**—[2]अदो एव्व क्खु णिब्बन्धो । सिणिद्धजणसंविभत्तं हि दुक्खं सज्झवेदणं होदि ।

**राजा**—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ११ ॥

**शकुन्तला**—[3]सहि । जदो पहुदि मम दंसणपहं आअदो से तबोवणरक्खिदा राएसी—( इत्यर्धोक्तेन लज्जां नाटयति । )

**उभे**—[4]कधेदु पिअसही ।

**शकुन्तला**—[5]तदो पहुदि तग्गदेण अहिलासेण एतदवत्थाह्मि संवुत्ता ।

---

१ सखि । कस्य वान्यस्य कथयिष्यामि । किंत्वायासयित्रीदानीं वां भविष्यामि ।

२ अत एव खलु निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ।

३ सखि । यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः।

४ कथयतु प्रियसखी ।

५ ततः प्रभृति तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता ।

**राजा**—( सहर्षम्। ) श्रुतं श्रोतव्यम्।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ १२ ॥

**शकुन्तला**—[1]तं जइ वो अणुमदं तह वट्टह जह तस्स राएसिणो अणुकम्पणिज्जा होमि। अण्णहा अवस्सं सिञ्चह मे तिलोदअं।

**राजा**—संशयच्छेदि वचनम्।

**प्रियंवदा**—( जनान्तिकम्। ) [2]अणसूए। दूरगअवम्महा अक्खमा इअं कालहरणस्स। जस्सिं बद्धभावा एसा सो ललामभूदो पोरवाणं। ता जुत्तं से अहिलासो अहिणन्दिदुं।

**अनसूया**—[3]तह जह भणासि।

**प्रियंवदा**—( प्रकाशम्। ) [4]सहि। दिट्ठिआ अणुरूवो से अहिणिवेसो। साअरं वज्जिअ कहिं वा महाणई ओदरइ। को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लविदं सहेदि।

**राजा**—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्त्तेते।

**अनसूया**—[5]को उण उवाओ भवे जेण अविलम्बिअं णिहुअं अ सहीए मणोरहं संपादेह्म।

**प्रियंवदा**—[6]णिहुअंत्ति चिन्तणिज्जं भवे। सिग्घंत्ति सुअरं।

---

१ तद्यदि वामनुमतं तथा वर्त्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि। अन्यथावश्यं सिञ्चतं मे तिलोदकम्।

२ अनसूये। दूरगतमन्मथाक्षमेयं कालहरणस्य। यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम्। तद्युक्तमस्या अभिलाषोऽभिनन्दितुम्।

३ तथा यथा भणसि।

४ सखि। दिष्ट्यानुरूपोऽस्या अभिनिवेशः। सागरं वर्जयित्वा कुत्र वा महानद्यवतरति। क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते।

५ कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः।

६ निभृतमिति चिन्तनीयं भवेत्। शीघ्रमिति सुकरम्।

**अनसूया**—[1]कहं विअ ।

**प्रियंवदा**—[2]णं सो राएसी इमस्सिं सिणिद्धदिट्ठीए सूइदाहिलासो इमाइं दिअहाइं पज्जाअरकिसो लक्खीअदि ।

**राजा**—( आत्मानमवलोक्य । ) सत्यमित्थंभूत एवास्मि । तथा हि ।

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रवर्त्तिभिरश्रुभिः ।
अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १३ ॥

**प्रियंवदा**—( विचिन्त्य । ) [3]हला । मअणलेहो से करीअदु । इमं देवदासेसावदेसेण सुमणोगोविदं करिअ से हत्थअं पावइस्सं ।

**अनसूया**—[4]रोअइ मे सुउमारो पओओ । किं वा सउन्दला भणादि ।

**शकुन्तला**—[5]सहीणिओओवि विकप्पीअदि ।

**प्रियंवदा**—[6]तेण हि अत्तणो उवण्णासपुव्वं चिन्तेहि दाव किंपि ललिअपदबन्धणं ।

**शकुन्तला**—[7]हला । चिन्तेमि अहं । अवहीरणभीरुअं पुणो वेवइ मे हिअअं ।

---

१ कथमिव ।

२ ननु स राजर्षिरस्यां स्निग्धदृष्ट्या सूचिताभिलाष इमानि दिवसानि प्रजागरकृशो लक्ष्यते ।

३ हला । मदनलेखोऽस्य क्रियताम् । इमं देवताशेषापदेशेन सुमनोगोपितं कृत्वास्य हस्तं मापयिष्यामि ।

४ रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति ।

५ सखीनियोगोऽपि विकल्प्यते ।

६ तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावत्किमपि ललितपदबन्धनम् ।

७ हला । चिन्तयाम्यहम् । अवधीरणभीरुकं पुनर्वेपते मे हृदयम् ।

**राजा**—( सहर्षम् । )

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ १४ ॥

**सख्यौ**—[1]अयि अत्तगुणावमाणिणि । को दाणिं सरीरणिव्वावइत्तिअं सारदिअं जोसिणिं पडन्तेण वारेदि ।

**शकुन्तला**—( सस्मितम् । ) [2]णिओइआ दाणिंह्मि । ( इत्युपविष्टा चिन्तयति । )

**राजा**—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः ।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १५ ॥

**शकुन्तला**—[3]हला । चिन्तिदा मए गीदिआ । ण क्खु सण्णिहिदाणि उण लेहणसाहणाणि ।

**प्रियंवदा**—[4]इमस्सिं सुओदरसुउमारे णलिणीपत्ते णहेहिं णिक्खित्तवण्णं करेहि ।

**शकुन्तला**—( यथोक्तं रूपयित्वा । ) [5]हला । सुणुह दाणिं संगदत्थं ण वेत्ति ।

---

१ अयि आत्मगुणावमानिनि । क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ।

२ नियोजितेदानीमस्मि ।

३ हला । चिन्तिता मया गीतिका । न खलु सन्निहितानि पुनर्लेखनसाधनानि ।

४ अस्मिञ्शुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु ।

५ हला । शृणुतमिदानीं संगतार्थं न वेति ।

उभे—अवहिदह्म।[1]

शकुन्तला—(वाचयति।)

तुज्झ ण आणे हिअअं मम उण कामो दिवावि रत्तिंवि।
णिग्घिण तवेइ बलिअं तुइ वुत्तमणोरहाइ अङ्गाइं ॥१६॥[2]

राजा—(सहसोपसृत्य।)

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः॥१७॥

सख्यौ—(विलोक्य सहर्षमुत्थाय।) साअदं अविलम्बिणो मणोरहस्स।[3]

(शकुन्तलाभ्युत्थातुमिच्छति।)

राजा—अलमलमायासेन।

संदष्टकुसुमशयनान्याशुक्लान्तबिसभङ्गसुरभीणि।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ १८ ॥

अनसूया—ईदो सिलातलेक्कदेसं अणुगेण्हदु वअस्सो।[4]

(राजोपविशति। शकुन्तला सलज्जा तिष्ठति।)

प्रियंवदा—दुवेणंपि वो अण्णोण्णाणुराओ पच्चक्खो। सहीसिणेहो उण मं पुणरुत्तवादिणिं करेदि।[5]

राजा—भद्रे। नैतत्परिहार्यम्। विवक्षितं ह्यनुक्तमनुतापं जनयति।

---

१ अवहिते स्वः।

२ तव न जाने हृदयं मम पुनः कामो दिवापि रात्रिमपि।
निर्घृण तपति बलीयस्त्वयि वृत्तमनोरथाया अङ्गानि॥

३ स्वागतमविलम्बिनो मनोरथस्य।

४ इतः शिलातलैकदेशमनुगृह्णातु वयस्यः।

५ द्वयोरपि युवयोरन्योन्यानुरागः प्रत्यक्षः। सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति।

**प्रियंवदा**—[1]आवण्णस्स विसअवासिणो जणस्स अत्तिहरेण रण्णा होदव्वंत्ति एसो वो धम्मो।

**राजा**—नास्मात्परम्।

**प्रियंवदा**—तेण[2] हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थन्तरं भअवता मअणेण आरोविदा। ता अरुहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं।

**राजा**—भद्रे। साधारणोऽयं प्रणयः। सर्वथानुगृहीतोऽस्मि।

**शकुन्तला**—( प्रियंवदामवलोक्य। ) हला[3]। किं अन्तेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण।

**राजा**—सुन्दरि।

इदमनन्यपरायणमन्यथा
हृदयसन्निहिते हृदयं मम।
यदि समर्थयसे मदिरेक्षणे
मदनबाणहतोऽस्मि हतः पुनः॥ १९॥

**अनसूया**—वैअस्स[4]। बहुवल्लहा राआणो सुणीअन्ति। जह णो पिअसही बन्धुअणसोअणिज्जा ण होइ तह णिव्वाहेहि।

**राजा**—भद्रे। किं बहुना।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।
समुद्ररसना चोर्वी सखी च युवयोरियम्॥ २०॥

---

१ आपन्नस्य विषयवासिनो जनस्यार्त्तिहरेण राज्ञा भवितव्यमित्येष वो धर्मः।

२ तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता। तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम्।

३ हला। किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन।

४ वयस्य। बहुवल्लभा राजानः श्रूयन्ते। यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वाहय।

उभे—णिं[1]व्वुदह्म ।

प्रियंवदा—( सदृष्टिक्षेपम् । ) अ[2]णसूए । जह एसो इदो दिण्णदिट्ठी उस्सुओ मिअपोदओ मादरं अण्णेसदि । एहि । संजोएम णं । ( इत्युभे प्रस्थिते । )

शकुन्तला—ह[3]ला । असरणह्मि । अण्णदरा वो आअच्छदु ।

उभे—पु[4]हवीए जो सरणं सो तुह समीवे वट्टइ । (इति निष्क्रान्ते ।)

शकुन्तला—क[5]हं गदाओ एव्व ।

राजा—अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्त्तते ।

किं शीतलैः क्लमविनोदिभिरार्द्रवाता-
न्संचारयामि नलिनीदलतालवृन्तैः ।
अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ २१ ॥

शकुन्तला—ण[6] माणणीएसु अत्ताणं अवराहइस्सं । ( इत्युत्थाय गन्तुमिच्छति । )

राजा—सुन्दरि । अपरिनिर्वाणो दिवसः । इयं च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥ २२ ॥

( इति बलादेनां निवर्त्तयति । )

---

१ निर्वृते स्वः ।

२ अनसूये । यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि । संयोजयाव एनम् ।

३ हला । अशरणास्मि । अन्यतरा युवयोरागच्छतु ।

४ पृथिव्या यो शरणं स तव समीपे वर्त्तते ।

५ कथं गते एव ।

६ न माननीयेष्वात्मानमपराधयिष्यामि ।

शकुन्तला—पोरव[1] । रक्ख विणअं । मअणसंतत्ताबि ण हु अत्तणो पहवामि ।

राजा—भीरु । अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्रभवान्नात्र दोषं ग्रहीष्यति कुलपतिः । अपि च ।

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणितास्ताः पितृभिश्चाभिनन्दिताः ॥ २३ ॥

शकुन्तला—मुञ्च[2] दाव मं । भूओबि सहीजणं अणुमाणइस्सं ।

राजा—भवतु । मोक्ष्यामि ।

शकुन्तला—कदा[3] ।

राजा—

अपरिक्षतकोमलस्य ताव-
त्कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते
सदयं सुन्दरि गृह्यते रसोऽस्य ॥ २४ ॥

( इति मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला परिहरति नाट्येन । )

( नेपथ्ये । )

चक्कवाकवहुए[4] । आमन्तेहि सहअरं । उवट्ठिआ रअणी ।

शकुन्तला—( ससंभ्रमम् । ) पौरव[5] । असंसअं मम सरीरवुत्तन्तोबलम्भस्स अज्जा गोदमी इदो एव्व आअच्छदि । दाव विडबन्तरिदो होहि ।

राजा—तथा । ( इत्यात्मानमावृत्य तिष्ठति । )

---

१ पौरव । रक्ष विनयम् । मदनसंतप्तापि न खल्वात्मनः प्रभवामि ।
२ मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्यामि ।
३ कदा ।
४ चक्रवाकवधुके । आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।
५ पौरव । असंशयं मम शरीरवृत्तान्तोपलम्भायार्या गौतमीत एवागच्छति । तावद्विटपान्तरितो भव ।

( ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च । )

**सख्यौ**—[1]इदो इदो अज्जा गोदमी ।

**गौतमी**—( शकुन्तलामुपेत्य । ) [2]जादे । अवि लहुसंदाबाइं दे अङ्गाइं ।

**शकुन्तला**—[3]अज्जे । अत्थि मे विसेसो ।

**गौतमी**—[4]इमिणा दब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि । ( शिरसि शकुन्तलामभ्युक्ष्य । ) वच्छे । परिणदो दिअहो। एहि । उडजं एव्व गच्छह्म । ( इति प्रस्थिताः । )

**शकुन्तला**—( आत्मगतम् । ) [5]हिअअ । पढमं एव्व सुहोबणदे मणोरहे कादरभावं ण मुञ्चसि । साणुसअविहडिअस्स कहं दे संपदं संदाबो । ( पदान्तरे स्थित्वा । प्रकाशम् । ) लदावलअ । संदाबहारअ । आमन्तेमि तुमं भूओवि परिभोअस्स । ( इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः । )

**राजा**—( पूर्वस्थानमुपेत्य । सनिःश्वासम् । ) अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः । मया हि

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु ॥ २९ ॥

---

१ इत इत आर्या गौतमी ।

२ जाते । अपि लघुसंतापानि तेऽङ्गानि ।

३ आर्ये । अस्ति मे विशेषः ।

४ अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । वत्से । परिणतो दिवसः । एहि । उटजमेव गच्छामः ।

५ हृदय । प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि । सानुशयविघटितस्य कथं ते सांप्रतं संतापः । लतावलय । संतापहारक । आमन्त्रये त्वां भूयोऽपि परिभोगाय ।

क्व नु खलु संप्रति गच्छामि । अथवा । इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्त्तं स्थास्यामि । ( सर्वतोऽवलोक्य । )

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्तोऽस्मि शून्यादपि॥२६॥

( आकाशे । )

राजन् ।

सायंतने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रकीर्णाः ।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानाम् ॥ २७ ॥

**राजा**—अयमयमागच्छामि । ( इति निष्क्रान्तः । )

इति तृतीयोऽङ्कः ।

---

## ॥ विष्कम्भः ॥

( ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ । )

**अनसूया**—हला पिअंवदे । जइवि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा सउन्दला अणुरूवभत्तुगामिणी संवुत्तेत्ति णिव्वुदं मे हिअअं तहवि एत्तिअं चिन्तणिज्जं ।[1]

**प्रियंवदा**—कहं विअ ।[2]

---

१ हला प्रियंवदे । यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तलानुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयं तथापीयच्चिन्तनीयम् ।

२ कथमिव ।

**अनसूया**—[1]अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदोगदं वुत्तन्तं सुरमदि वा ण वेत्ति ।

**प्रियंवदा**—[2]वीसद्धा होहि । ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । किंदु तादो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं पडिबज्जिस्सदित्ति ।

**अनसूया**—[3]जह अहं देक्खामि । तह तस्स अणुमदं भवे ।

**प्रियंवदा**—[4]कहं विअ ।

**अनसूया**—[5]गुणवदे कण्णआ पडिबादणिज्जेत्ति अअं दाव पढमो संकप्पो । तं जइ देव्वं एव्व संपादेदि णं अप्पाआसेण किदत्थो गुरुअणो ।

**प्रियंवदा**—( पुष्पभाजनं विलोक्य । ) [6]सहि । अवइदाइं बलिकम्मपज्जत्ताइं कुसुमाइं ।

**अनसूया**—[7]णं पिअसहीए सउन्दलाए सोहग्गदेवआ अच्चणीआ ।

**प्रियंवदा**—[8]जुज्जदि । ( इति तदेव कर्मारभेते । )

---

१ अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति ।

२ विश्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । किंतु तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।

३ यथाहं पश्यामि तथा तस्यानुमतं भवेत् ।

४ कथमिव ।

५ गुणवते कन्या प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः । तं यदि दैवमेव संपादयति नन्वल्पायासेन कृतार्थो गुरुजनः ।

६ सखि । अवचितानि बलिकर्मपर्याप्तानि कुसुमानि ।

७ ननु प्रियसख्याः शकुन्तलायाः सौभाग्यदेवतार्चनीया ।

८ युज्यते ।

(नेपथ्ये।)

अयमहं भोः।

**अनसूया**—(कर्णं दत्त्वा।) [1]सहि। अदिधिणा विअ णिवेदिदं।

**प्रियंवदा**—[2]णं उडजसण्णिहिदा सउन्दला। (आत्मगतम्।) अज्ज उण हिअएण असण्णिहिदा।

**अनसूया**—[3]होदु। अलं एत्तिएहिं कुसुमेहिं। (इति प्रस्थिते।)

(नेपथ्ये।)

आः अतिथिपरिभाविनि।

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि स-
न्कथां प्रमत्तः प्रथमं कृतामिव॥ १॥

**प्रियंवदा**—[4]हद्धी हद्धी। अप्पिअं एव्व संवुत्तं। कस्सिंपि पूआरुहे अवरद्धा सुण्णहिअआ सउन्दला। (पुरोऽवलोक्य।) ण हु जस्सिं कस्सिंपि। एसो दुव्वासो सुलहकोबो महेसी। तह सविअ वेअचडुलुप्फुल्लदुव्वाराए गईए पडिणिवुत्तो। को अण्णो हुदवहादो दहिदुं पहविस्सदि।

**अनसूया**—[5]गच्छ। पादेसु पणमिअ णिवत्तेहि णं जाव अहं अग्घोदअं उबकप्पेमि।

---

१ सखि। अतिथिनेव निवेदितम्।

२ ननूटजसन्निहिता शकुन्तला। अद्य पुनर्हृदयेनासन्निहिता।

३ भवतु। अलमियद्भिः कुसुमैः।

४ हा धिक् हा धिक्। अप्रियमेव संवृत्तम्। कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला। न खलु यस्मिन्कस्मिन्नपि। एष दुर्वासाः सुलभकोपो महर्षिः। तथा शप्त्वा वेगचटुलोत्फुल्लदुर्वारया गत्या प्रतिनिवृत्तः। कोऽन्यो हुतवहाद्दग्धुं प्रभविष्यति।

५ गच्छ। पादयोः प्रणम्य निवर्त्तयैनं यावदहमघ्योदकमुपकल्पयामि।

**प्रियंवदा**—तह[1] । ( इति निष्क्रान्ता । )

**अनसूया**—( पदान्तरे स्खलितं निरूप्य । ) अम्मो[2] । आवेअक्खलिदाए गईए पब्भट्ठं मे हत्थादो पुप्फभाअणं । (इति पुष्पोच्चयं रूपयति ।)

( प्रविश्य । )

**प्रियंवदा**—सहि[3] । पकिदिवक्को सो कस्स अणुणअं पडिगेण्हदि । किंपि उण साणुक्कोसो किदो ।

**अनसूया**—( सस्मितम् । ) तस्सिं[4] बहु एदंपि । कहेहि ।

**प्रियंवदा**—जदा[5] णिवत्तिदुं ण इच्छदि तदा विण्णविदो मए । भअवं । पढमंत्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदुजणस्स भअवदा एक्को अवराहो मरिसिदव्वोत्ति ।

**अनसूया**—तदो[6] तदो ।

**प्रियंवदा**—तदो[7] मे वअणं अण्णहाभविदुं णारिहदि । किंदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदित्ति मन्तअन्तो सअं अन्तरिहिदो ।

**अनसूया**—सक्कं[8] दाणिं अस्ससिदुं । अत्थि तेण राएसिणा

---

१ तथा ।

२ अहो । आवेगस्खलितया गत्या प्रभ्रष्टं मे हस्तात्पुष्पभाजनम् ।

३ सखि । प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति । किमपि पुनः सानुक्रोशः कृतः ।

४ तस्मिन्बह्वेतदपि । कथय ।

५ यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया । भगवन् । प्रथममिति प्रेक्ष्य अविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षयितव्य इति ।

६ ततस्ततः ।

७ ततो मे वचनमन्यथाभवितुं नार्हति । किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयमाणः स्वयमन्तर्हितः ।

८ शक्यमिदानीमाश्वसितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन

संपत्थिदेण सणामहेअङ्किअं अङ्गुलीअअं सुमरणीअंत्ति सअं पिणद्धं । तस्सिं साहीणोबाआ सउन्दला भविस्सदि ।

प्रियंवदा---सहि । एहि । देवकज्जं दाव णिव्वत्तेम्ह ।

( इति परिक्रामतः । )

प्रियंवदा---( अवलोक्य । ) अणसूए । पेक्ख दाव । वामहत्थोबहिदवअणा आलिहिदा विअ पिअसही । भत्तुगदाए चिन्ताए अत्ताणं पि ण एसा विभावेदि । किं उण आअन्तुअं ।

अनसूया---पिअंवदे । दुवेणं एव्व णो मुहे एसो वुत्तन्तो चिट्ठदु । रक्खणीआ क्खु पकिदिपेलवा पिअसही ।

प्रियंवदा---को दाणिं उण्होदएण णोमालिअं सिञ्चेदि ।

( इत्युभे निष्क्रान्ते । )

इति विष्कम्भः ।

---

## ॥ चतुर्थोऽङ्कः ॥

( ततः प्रविशति सुप्तोत्थितः शिष्यः । )

शिष्यः---वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन । प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति । ( परिक्रम्यावलोक्य च । ) हन्त प्रभातम् । तथा हि ।

---

स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति ।

१ सखि । एहि । देवकार्यं तावन्निर्वर्तयावः ।

२ अनसूये । प्रेक्षस्व तावत् । वामहस्तोपहितवदनालिखितेव प्रियसखी । भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति । किं पुनरागन्तुकम् ।

३ प्रियंवदे । द्वयोरेव नौ मुख एष वृत्तान्तस्तिष्ठतु । रक्षणीया खलु प्रकृतिपेलवा प्रियसखी ।

४ क इदानीमुष्णोदकेन नवमालिकां सिञ्चति ।

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतारुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ १ ॥

अपि च ।

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ २ ॥

( प्रविश्य पटाक्षेपेण । )

**अनसूया**—[१]एव्वं णाम विसअपरम्मुहस्स वि इमस्स जणस्स ण एदं ण विदिअं । तेण रण्णा सउन्दलाए अणज्जं आअरिदंत्ति ।

**शिष्यः**—यावदुपस्थितां होमवेलां गुरवे निवेदयामि । ( इति निष्क्रान्तः । )

**अनसूया**—[२]पडिबुद्धावि किं करिस्सं । ण मे उइदेसुवि णिअकरणिज्जेसु हत्थपाआ पसरन्ति । कामो दाणिं सकामो होदु । जेण असच्चसन्धे जणे सुद्धहिअआ सही पदं कारिदा । अहवा दुव्वाससावो एसो विआरेदि । अण्णहा कहं सो राएसी तारिसाणि मन्तिअ एत्तिअस्स कालस्स लेहमेत्तंपि ण विसज्जेदि । ता इदो अहिण्णाणं अङ्गुलीअअं से विसज्जेम । दुक्खसीले तवस्सिजणे को अब्भत्थीअदु । णं सहीगामी दोसोत्ति व्ववसिदावि ण पारेमि पवासपडिणिउत्तस्स तादकस्सबस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदिदुं । इत्थंगए अम्हेहिं किं करणिज्जं ।

---

१ एवं नाम विषयपराङ्मुखस्याप्यस्य जनस्य नैतन्न विदितम् । तेन राज्ञा शकुन्तलायामनार्यमाचरितमिति ।

२ प्रतिबुद्धापि किं करिष्यामि । न मे उचितेष्वपि निजकरणीयेषु हस्तपादाः प्रसरन्ति । काम इदानीं सकामो भवतु । येनासत्यसंधे जने शुद्ध-

( प्रविश्य । )

**प्रियंवदा**—( सहर्षम् ) सहि[1] । तुवर तुवर सउन्दलाए पत्थाणकोदुअं णिव्वत्तिदुं ।

**अनसूया**—सहि[2] । कहं एदं ।

**प्रियंवदा**—सुणाहि[3] दाणिं । सुहसइदं पुच्छिदुं सउन्दलासआसं गदह्मि ।

**अनसूया**—तदो[4] तदो ।

**प्रियंवदा**—दाव[5] एणं लज्जावणदमुहिं परिस्सजिअ सअं तादकस्सबेण एव्वं अहिणन्दिदं । दिठ्ठिआ । धूमाउलिददिठ्ठिणोबि जअमाणस्स पाअए एव्व आहुदी पडिदा । वच्छे । सुसिस्सपरिदिण्णा विअ विज्जा असोअणिज्जा संवुत्ता । अज्ज एव्व इसिपडिरक्खिदं तुमं भत्तुणो सआसं विसज्जेमित्ति ।

**अनसूया**—अह[6] केण सूइदो तादकस्सवस्स वुत्तन्तो ।

---

हृदया सखी पदं कारिता । अथवा दुर्वासःशाप एष विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावतः कालस्य लेखमात्रमपि न विसर्जयति । तदितोऽभिज्ञानमङ्गुलीयकमस्य विसर्जयावः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् । ननु सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगतेऽस्माभिः किं करणीयम् ।

१ सखि । त्वरय त्वरय शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम् ।

२ सखि । कथमेतत् ।

३ शृण्विदानीम् । सुखशयितं प्रष्टुं शकुन्तलासकाशं गतास्मि ।

४ ततस्ततः ।

५ तावदेनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकाश्यपेनैवमभिनन्दितम् । दिष्ट्या । धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । वत्से । सुशिष्यपरिदत्तेव विद्याशोचनीया संवृत्ता । अद्यैव ऋषिप्रतिरक्षितां त्वां भर्तुः सकाशं विसर्जयामीति ।

६ अथ केन सूचितस्तातकाश्यपस्य वृत्तान्तः ।

**प्रियंवदा**— [1]अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोमईए वाआए।

**अनसूया**—( सविस्मयम् । ) [2]कहेहि।

**प्रियंवदा**—( संस्कृतमाश्रित्य । )

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ३ ॥

**अनसूया**—( प्रियंवदामाश्लिष्य । ) [3]सहि। पिअं मे पिअं मे। किंदु अज्ज एव्व सउन्दला णीअदित्ति उक्कण्ठासाहारणं परितोसं अणुहोमि।

**प्रियंवदा**—[4]सहि। वअं दाव उक्कण्ठं विणोदइस्सामो। सा तवस्सिणी णिव्वुदा होदु।

**अनसूया**—[5]तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएरसमुग्गए एतण्णिमित्तं एव्व कालन्तरक्खमा णिक्खित्ता मए केसरमालिआ। ता इमं हत्थसण्णिहिदं करेहि। जाव अहंपि से मिअलोअणं तित्थमित्तिअं दुव्वाकिसलआणित्ति मङ्गलसमालम्भणाणि विरएमि।

**प्रियंवदा**—[6]तह करीअदु।

---

१ अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाचया।

२ कथय।

३ सखि। प्रियं मे प्रियं मे। किंत्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि।

४ सखि। आवां तावदुत्कण्ठां विनोदयिष्यावः। सा तपस्विनी निर्वृता भवतु।

५ तेन ह्येतस्मिंश्चूतशाखावलम्बिते नारिकेरसमुद्गक एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केशरमालिका। तदिमां हस्तसन्निहितां कुरु। यावदहमप्यस्या मृगरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि।

६ तथा क्रियताम्।

(अनसूया निष्क्रान्ता। प्रियंवदा नाट्येन सुमनसो गृह्णाति।)

(नेपथ्ये।)

गौतमि। आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय।

**प्रियंवदा**—(कर्णं दत्त्वा।) [1]अनसूए। तुवर तुवर। एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दाबीअन्ति।

(प्रविश्य समालम्भनहस्ता।)

**अनसूया**—[2]सहि। एहि। गच्छह्म।

(इति परिक्रामतः।)

**प्रियंवदा**—(विलोक्य।) [3]एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिदणीवारहत्थाहिं सोत्थिवाअणकाहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ। उवसप्पह्म णं।

(इत्युपसर्पतः।)

(ततः प्रविशति यथोद्दिष्टव्यापारासनस्था शकुन्तला।)

**तापसीनामन्यतमा**—(शकुन्तलां प्रति।) [4]जादे। भत्तुणो बहुमाणसूअअं महादेईसद्दं लहेहि।

**द्वितीया**—[5]वच्छे। वीरप्पसविणी होहि।

**तृतीया**—[6]वच्छे। भत्तुणो बहुमदा होहि।

(इत्याशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः।)

**सख्यौ**—(उपसृत्य।) [7]सहि। सुहमज्जणं दे होदु।

---

१ अनसूये। त्वरय त्वरय। एते खलु हस्तिनापुरगामिन ऋषयः शब्दाय्यन्ते।

२ सखि। एहि गच्छावः।

३ एषा सूर्योदय एव शिखामार्जिता प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति। उपसर्पाव एनाम्।

४ जाते। भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व।

५ वत्से। वीरप्रसविनी भव।

६ वत्से। भर्तुर्बहुमता भव।

७ सखि। सुखमार्जनं ते भवतु।

शकुन्तला—[1]साअदं मे सहीणं । इदो णिसीदह ।

उभे—( मङ्गलपात्राण्यादाय । उपविश्य । ) [2]हला । सज्जा होहि । जाव मङ्गलसमालम्भणं विरएम ।

शकुन्तला—[3]एदंपि बहु मन्तव्वं । दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि । ( इति बाष्पं विसृजति । )

उभे—[4]सहि । उइअं ण दे मङ्गलकाले रोइदुं । ( इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः । )

प्रियंवदा—[5]आहरणोइदं रूवं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि ।

( प्रविश्योपायनहस्तावृषिकुमारकौ । )

उभौ—इदमलंकरणम् । अलंक्रियतामत्रभवती ।

( सर्वा विलोक्य विस्मिताः । )

गौतमी—[6]वच्छ णारअ । कुदो एदं ।

प्रथमः—तातकाश्यपप्रभावात् ।

गौतमी—[7]किं माणसी सिद्धी ।

द्वितीयः—न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः । शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीं

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।

---

१ स्वागतं मे सखीभ्याम् । इतो निषीदतम् ।
२ हला । सज्जा भव । यावन्मङ्गलसमालम्भनं विरचयावः ।
३ एतदपि बहु मन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यति ।
४ सखि । उचितं न ते मङ्गलकाले रोदितुम् ।
५ आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ।
६ वत्स नारद । कुत एतत् ।
७ किं मानसी सिद्धिः ।

अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-

र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ४ ॥

प्रियंवदा—( शकुन्तलां विलोक्य। ) [1]हला। इमाए अब्भुववत्तीए सूइआ दे भत्तुणो गेहे अणुहोदव्वा राअलच्छित्ति।

( शकुन्तला व्रीडां रूपयति। )

प्रथमः—गौतम। एह्येहि। अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः।

द्वितीयः—तथा।

( इति निष्क्रान्तौ। )

सख्यौ—[2]अए अणुवहुत्तभूसणो अअं जणो। चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेह्म।

शकुन्तला—[3]जाणे वो णेउणं।

( उभे नाट्येनालंकुरुतः। )

( ततः प्रविशति स्नानोत्तीर्णः काश्यपः। )

काश्यपः—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया

कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।

वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः

पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ५ ॥

( इति परिक्रामति। )

सख्यौ—[4]हला सउन्दले। अवसिदमण्डणासि। परिधेहि संपदं क्खोमजुअलं।

---

१ हला। अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गृहेऽनुभवितव्या राजलक्ष्मीरिति।

२ अये। अनुपभुक्तभूषणोऽयं जनः। चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं कुर्वः।

३ जाने वां नैपुणम्।

४ हला शकुन्तले। अवसितमण्डनासि। परिधत्स्व सांप्रतं क्षौमयुगलम्।

( शकुन्तलोत्थाय परिधत्ते१ )

**गौतमी**—जादे । एसो दे आणन्दपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्जस्स ।

**शकुन्तला**—( सव्रीडम् । ) तादद । वन्दामि ।

**काश्यपः**—वत्से ।

यथातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ६ ॥

**गौतमी**—३भअवं । वरो क्खु एसो । ण आसिसा ।

**काश्यपः**—वत्से । इतः सद्यो हुताग्नीन्प्रदक्षिणीकुरुष्व ।

( सर्वे परिक्रामन्ति । )

**काश्यपः**— ( ऋक्छन्दसाशास्ते । )

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु ॥ ७ ॥

प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् । ) क ते शार्ङ्गरवमिश्राः ।

( प्रविश्य । )

**शिष्यः**—भगवन् । इमे स्मः ।

**काश्यपः**—भगिन्यास्ते मार्गमादेशय ।

**शार्ङ्गरवः**—इत इतो भवती ।

( सर्वे परिक्रामन्ति । )

**काश्यपः**—भो भोः सन्निहितास्तपोवनतरवः ।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।

---

१ जाते । एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुप-स्थितः । आचारं तावत्प्रतिपद्यस्व ।

२ तात । वन्दे ।

३ भगवन् । वरः खल्वेषः । नाशीः ।

आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ८ ॥

( कोकिलरवं सूचयित्वा । )

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरीदृशम् ॥ ९ ॥

( आकाशे । )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ १० ॥

( सर्वे सविस्मयमाकर्णयन्ति । )

**गौतमी**—[1]जादे । ण्णादिजणसिणिद्धाहिं अणुण्णादगमणासि तबोवणदेवदाहिं । पणम भअवदीणं ।

**शकुन्तला**—( सप्रणामं परिक्रम्य । जनान्तिकम् । ) [2]हला पिअंवदे । णं अज्जउत्तदंसणुस्सुआएवि अस्समं परिच्चअन्तीए दुक्खेण मे चलणा पुरदो पवट्टन्ति ।

**प्रियंवदा**—[3]ण केवलं तबोवणविरहकादरा सही एव्व । तुए उवट्ठिदविओअस्स तबोवणस्सवि दाव समवत्था दीसइ ।

उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा मोरा ।
ओसरिअपण्डुपत्ता मुअन्ति अंसू विअ लदाओ ॥ ११ ॥

---

१ जाते । ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । प्रणम भगवतीभ्यः ।

२ हला प्रियंवदे । नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्त्तेते ।

३ न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते ।

**शकुन्तला**—( स्मृत्वा । ) तादं[1] । लदाबहिणिअं वणजोसिणिं दाव आमन्तइस्सं ।

**काश्यपः**—अवैमि ते तस्यां सोदर्यस्नेहम् । इयं तावद्दक्षिणेन ।

**शकुन्तला**—( लतामुपेत्य । ) वणजोसिणि[2] । चूदसंगदावि मं पच्चालिङ्ग इतोगदाहिं साहाबाहाहिं । अज्जप्पहुदि दूरपरिवत्तिणी दे खु भविस्सं ।

**काश्यपः**—

संकल्पितं प्रथममेव मया तवार्थे
भर्त्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥१२॥

इतः पन्थानं प्रतिपद्यस्व ।

**शकुन्तला**—( सख्यौ प्रति । ) हला[3] । एसा दुवेणं वो हत्थे णिक्खेवो ।

**सख्यौ**—अअं[4] जणो कस्स हत्थे समप्पिदो । ( इति बाष्पं विहरतः । )

**काश्यपः**—अनसूये । अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

( सर्वे परिक्रामन्ति । )

---

उद्गलितदर्भकवला मृगाः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥

१ तात । लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ।

२ वनज्योत्स्ने । चूतसंगतापि मां प्रत्यालिङ्गेतोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरपरिवर्त्तिनी ते खलु भविष्यामि ।

३ हला । एषा द्वयोर्वां हस्ते निक्षेपः ।

४ अयं जनः कस्य हस्ते समर्पितः ।

शकुन्तला—तादᵒ[1] एसा उडजपज्जन्तचारिणी गब्भमन्थरा मिअवहू जदा अणघप्पसवा होइ तदा मे कंपि पिअणिवेदइत्तअं विसज्जइस्सह ।

काश्यपः—नेदं विस्मरिष्यामः ।

शकुन्तला—( गतिभङ्गं रूपयित्वा । ) कोᵒ[2] णु क्खु एसो णिवसणे मे सज्जइ । ( इति परावर्तते । )

काश्यपः—वत्से ।

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १३ ॥

शकुन्तला—वच्छᵒ[3] । किं सहवासपरिच्चाइणिं मं अणुसरसि । अचिरप्पसूदाए जणणीए विणा विवड्ढिदो एव्व । दाणिं पि मए विरहिदं तुमं तादो चिन्तइस्सदि । णिवत्तेहि दाव । ( इति रुदती प्रस्थिता । )

काश्यपः—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विरतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १४ ॥

शार्ङ्गरवः—भगवन् । ओदकान्तात्स्निग्धो जनोऽनुगन्तव्य

---

१ तात । एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मे कमपि प्रियनिवेदयितारं विसर्जयिष्यथ ।

२ को नु खल्वेष निवसने मे सज्जति ।

३ वत्स । किं सहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विना विवर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् ।

इति श्रूयते। तदिदं सरस्तीरम्। अत्र संदिश्य प्रतिगन्तुमर्हसि।

**काश्यपः**—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः।

( सर्वे परिक्रम्य स्थिताः। )

**काश्यपः**—( आत्मगतम्। ) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम्। ( इति चिन्तयति। )

**शकुन्तला**—( जनान्तिकम्। ) हला। पेक्ख। णलिणीपत्तन्तरिदं पिअसहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि। दुक्करं अहं करेमित्ति।

**अनसूया**—सहि। मा एव्वं मन्तेहि।

एसावि पिएण विणा गमेइ रअणिं विसाअदीहअरं।
गरुअं पि विरहदुक्खं आसाबन्धो सहावेदि॥ १५॥

**काश्यपः**—शार्ङ्गरव। त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

**शार्ङ्गरवः**—आज्ञापयतु भवान्।

**काश्यपः**—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः॥१६॥

**शार्ङ्गरवः**—गृहीतः संदेशः।

**काश्यपः**—वत्से। त्वमिदानीमनुशासनीयासि। वनौकसोऽपि सन्तो लौकिकज्ञा वयम्।

---

१ हला। प्रेक्षस्व। नलिनीपत्रान्तरितं प्रियसहचरमपश्यन्त्यातुरा चक्रवाक्यारटति। दुष्करमहं करोमीति।

२ सखि। मैवं मन्त्रयस्व।

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।
गुर्वपि विरहदुःखमाशाबन्धः साहयति॥

शार्ङ्गरवः—न खलु धीमतां कश्चिदविषयो नाम ।

काश्यपः—सा त्वमितः पतिकुलं प्राप्य

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥१७॥

कथं वा गौतमी मन्यते ।

गौतमी—[1]एत्तिओ वहूजणस्स उवदेसो । जादे । एदं क्खु सव्वं ओधारेहि ।

काश्यपः—वत्से । परिष्वजस्व मां सखीजनं च ।

शकुन्तला—[2]ताद । इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति ।

काश्यपः—वत्से । इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

शकुन्तला—( पितरमाश्लिष्य । ) [3]कहं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलअतरूम्मूलिआ चन्दणलदा विअ देसन्तरे जीविअं धारइस्सं ।

काश्यपः—वत्से । किमेवं कातरासि ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ १८ ॥

( शकुन्तला पितुः पादयोः पतति । )

---

१ एतावान्वधूजनस्योपदेशः । जाते । एतत्खलु सर्वमवधारय ।

२ तात । इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ।

३ कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि ।

काश्यपः—यदिच्छामि ते तदस्तु ।

शकुन्तला—( सख्यावुपेत्य । ) हला[1] । दुवेवि मं समं एव्व परिस्सजह ।

सख्यौ—( तथा कृत्वा । ) सहि[2] । जइ णाम सो राआ पच्चहिण्णाणमन्थरो भवे तदो से इमं अत्तणामहेअङ्किअं अङ्गुलीअअं दंसेहि ।

शकुन्तला—इमिणा[3] संदेहेण वो आकम्पिदह्मि ।

सख्यौ—मा[4] भाआहि । अदिसिणेहो पावसङ्की ।

शार्ङ्गरवः—युगान्तरमारूढः सविता । त्वरतामत्रभवती ।

शकुन्तला—( आश्रमाभिमुखी स्थित्वा । ) तादे[5] । कदा णु भूओ तवोवणं पेक्खिस्सं ।

काश्यपः—श्रूयताम् ।

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्द्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥१९॥

गौतमी—जादे[6] । परिहीअदि गमणवेला । णिवत्तेहि पिदरं। अहवा । चिरेणवि पुणो पुणो एसा एव्वं मन्तइस्सदि । णिवत्तदु भवं।

काश्यपः—वत्से । उपरुध्यते तपोऽनुष्ठानम् ।

---

१ हला । द्वे अपि मां सममेव परिष्वजेथाम् ।

२ सखि । यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततोऽस्मा इदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ।

३ अनेन संदेहेन वामाकम्पितास्मि ।

४ मा बिभीहि । अतिस्नेहः पापशङ्की ।

५ तात । कदा नु भूयस्तपोवनं प्रेक्षिष्ये ।

६ जाते । परिहीयते गमनवेला । निवर्त्तय पितरम् । अथवा । चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते । निवर्त्ततां भवान् ।

शकुन्तला— ( भूयः पितरमाश्लिष्य । ) तवच्चरणपीडिदं ताद-सरीरं । ता मा अदिमेत्तं मम किदे उक्कण्ठ ।

काश्यपः— ( सनिःश्वासम् । )

शममेष्यति मम शोकः कथं नु वत्से त्वया चरितपूर्वम् ।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २० ॥

गच्छ । शिवास्ते पन्थानः सन्तु ।

( निष्क्रान्ता शकुन्तला सहयायिनश्च । )

सख्यौ— ( शकुन्तलां विलोक्य । ) हद्धी हद्धी । अन्तलिहिदा सउन्दला वणराईए ।

काश्यपः— ( सनिःश्वासम् । ) अनसूये । गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

उभे— ताद । सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पविसामो ।

काश्यपः— स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य । ) हन्त भोः । शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः ।

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २१ ॥

( इति निष्क्रान्ताः सर्वे । )

## इति चतुर्थोऽङ्कः ।

---

१ तपश्चरणपीडितं तातशरीरम् । तन्मातिमात्रं मम कृत उत्कण्ठस्व ।
२ हा धिक् हा धिक् । अन्तर्हिता शकुन्तला वनराज्या ।
३ तात । शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ।

## ॥ पञ्चमोऽङ्कः ॥

( ततः प्रविशत्यासनस्थो राजा विदूषकश्च । )

**विदूषकः**—( कर्णं दत्त्वा । ) [1]भो भो वअस्स । संगीतसालन्तरे अवधाणं देहि । कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि । जाणे । तत्तहोदी हंसवदिआ वण्णपरिअअं करेदित्ति ।

**राजा**— तूष्णीं भव । यावदाकर्णयामि ।

( आकाशे गीयते । )

[2]अहिणवमहुलोलुब्वो तुमं
तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसइमेत्तणिव्वुदो
महुअर विह्मरिओसि णं कहं ॥ १ ॥

**राजा**— अहो रागपरिवाहिणी गीतिः ।

**विदूषकः**—[3]किं दाव गीदीए अवगओ अक्खरत्थो ।

**राजा**— ( स्मितं कृत्वा । ) सकृत्कृतप्रणयोऽयं जनः । तदस्या देवीं वसुमतीमन्तरेण महदुपालम्भनं गतोऽस्मि । सखे माठव्य । मद्वचनादुच्यतां हंसपादिका । निपुणमुपालब्धोऽस्मीति ।

**विदूषकः**—[4]जं भवं आणवेदि । ( उत्थाय । ) भो वअस्स । गहीदस्स ताए परकीएहिं हत्थेहिं सिहण्डए ताडीअमाणस्स अच्छराए वीदराअस्स विअ णत्थि दाणिं मे मोक्खो ।

**राजा**— गच्छ । नागरिकवृत्त्या संज्ञापयैनाम् ।

---

१ भो भो वयस्य । संगीतशालान्तरेऽवधानं देहि । कलविशुद्धायां गीत्यां स्वरसंयोगः श्रूयते । जाने । तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ।

२ अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥

३ किं तावद्गीत्यावगतोऽक्षरार्थः ।

४ यद्भवानाज्ञापयति । भो वयस्य । गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके ताड्यमानस्याप्सरसा वीतरागस्येव नास्तीदानीं मे मोक्षः ।

**विदूषकः**— का गई<sup></sup>[1] । ( इति निष्क्रान्तः । )

**राजा**— ( आत्मगतम् । ) किं नु खलु गीतार्थमाकर्ण्येष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा ।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ २ ॥

( इति पर्याकुलस्तिष्ठति । )

( ततः प्रविशति कञ्चुकी । )

**कञ्चुकी**— अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि ।

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्थम् ॥ ३ ॥

भोः । कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थितस्य पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदितुम् । अथवा । अविश्रामोऽयं लोकतन्त्राधिकारः । कुतः ।

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥

यावन्नियोगमनुतिष्ठामि । ( परिक्रम्यावलोक्य च । ) एष देवः

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते श्रान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५ ॥

---

१ का गतिः ।

( उपगम्य । ) जयतु जयतु देवः । एते खलु हिमवतो गिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

**राजा**— ( सादरम् । ) किं काश्यपसंदेशहारिणः ।

**कञ्चुकी**— अथ किम् ।

**राजा**— तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः । अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्यत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि ।

**कञ्चुकी**— यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

**राजा**— ( उत्थाय । ) वेत्रवति । अग्निशरणमार्गमादेशय ।

**प्रतीहारी**— इदो इदो देवो ।

**राजा**— ( परिक्रामति । अधिकारखेदं निरूप्य । ) सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखोत्तरैव ।

औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय न च श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ६ ॥

( नेपथ्ये । )

**वैतालिकौ**—विजयतां देवः ।

**प्रथमः**—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ७ ॥

---

१ इत इतो देवः ।

**द्वितीयः—**

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ८ ॥

**राजा—** एते क्लान्तमनसः पुनर्नवीकृताः स्मः । (इति परिक्रामति ।)

**प्रतीहारी—** [1]अहिणवसम्मज्जणसस्सिरीओ सण्णिहिदहोमधेणू अग्गिसरणालिन्दो । आरुहदु देवो ।

**राजा—** (आरुह्य परिजनांसावलम्बी तिष्ठति ।) वेत्रवति । किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः ।

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ९ ॥

**प्रतीहारी—** [2]सुचरिदणन्दिणो इसीओ देवं सभाजइदुं आअदेत्ति तक्केमि ।

(ततः प्रविशन्ति गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः । पुरश्चैषां कञ्चुकी पुरोहितश्च ।)

**कञ्चुकी—** इत इतो भवन्तः ।

**शार्ङ्गरवः—** शारद्वत ।

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ १० ॥

---

१ अभिनवसंमार्जनसश्रीकः सन्निहितहोमधेनुरग्निशरणालिन्दः । आरोहतु देवः ।

२ सुचरितनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि ।

**शारद्वतः**—जाने भवान्पुरप्रवेशादित्थंभूतः संवृत्तः । अहमपि

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥ ११ ॥

**शकुन्तला**—( निमित्तं सूचयित्वा । ) अम्महे । किं मे वामेदरं णअणं विप्फुरदि ।

**गौतमी**—जादे । पडिहदं अमङ्गलं । सुहाइं दे भत्तुकुलदेवदाओ वितरन्दु । ( इति परिक्रामति । )

**पुरोहितः**—( राजानं निर्दिश्य । ) भो भोस्तपस्विनः । असावत्रभवान्वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति । पश्यतैनम् ।

**शार्ङ्गरवः**—भो महाब्राह्मण । काममेतदभिनन्दनीयम् । तथापि वयमत्र मध्यस्थाः । कुतः ।

भवन्ति नम्रास्तरवः फलागमै-
र्नवाम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ १२ ॥

**प्रतीहारी**—देव । पसण्णमुहवण्णा दीसन्ति । जाणामि । वीस्सद्धकज्जा इसीओ ।

**राजा**—( शकुन्तलां दृष्ट्वा । ) अथात्रभवती

का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १३ ॥

**प्रतीहारी**—देव । कुतूहलगब्भो पहिदो ण मे तक्को पसरदि । णं दंसणीआ उण से आकिदी लक्खीअदि ।

---

१ अहो । किं मे वामेतरन्नयनं विस्फुरति ।

२ जाते । प्रतिहतममङ्गलम् । शुभानि ते भर्तृकुलदेवता वितरन्तु ।

३ देव । प्रसन्नमुखवर्णा दृश्यन्ते । जानामि । विश्रब्धकार्या ऋषयः ।

४ देव । कुतूहलगर्भः प्रहितो न मे तर्कः प्रसरति । ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ।

राजा—भवतु। अनिर्वर्णनीयं परकलत्रम्।

शकुन्तला—( हस्तमुरसि कृत्वा। आत्मगतम्। ) हिअअ[1]। किं एव्वं वेबसि। अज्जउत्तस्स भावं ओदारिअ धीरं धाव होहि।

पुरोहितः—( पुरो गत्वा। ) एते विधिवदर्चितास्तपस्विनः। कश्चिदेषामुपाध्यायसंदेशः। तं देवः श्रोतुमर्हति।

राजा—अवहितोऽस्मि।

ऋषयः—( हस्तानुद्यम्य। ) विजयस्व राजन्।

राजा—सर्वानभिवादये।

ऋषयः—इष्टेन युज्यस्व।

राजा—अपि निर्विघ्नतपसो मुनयः।

ऋषयः—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति॥ १४॥

राजा—अर्थवान्खलु मे राजशब्दः। अथ भगवांल्लोकानुग्रहाय कुशली काश्यपः।

ऋषयः—स्वाधीनकुशलाः सिद्धिमन्तः। स भवन्तमनामयप्रश्नपूर्वकमिदमाह।

राजा—किमाज्ञापयति भगवान्।

शार्ङ्गरवः—यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त। तन्मया प्रीतिमता युवयोरनुज्ञातम्। कुतः।

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्त्तिमती च सत्क्रिया।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः॥ १५॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति।

---

१ हृदय। किमेवं वेपसे। आर्यपुत्रस्य भावमवधार्य धीरं तावद्भव।

**गौतमी**—अज्ज। किंपि वत्तुकाम्हि। ण मे वअणावसरो अत्थि। कहंत्ति।

णावेक्खिओ गुरुअणो इमिणा ण तुएवि पुच्छिदो बन्धू।
एक्कैक्कं एव्व चरिए किं भणदु एक्क एक्कस्स॥ १६॥

**शकुन्तला**—(आत्मगतम्।) किं णु क्खु अज्जउत्तो भणादि।

**राजा**—किमिदमुपन्यस्तम्।

**शकुन्तला**—(आत्मगतम्।) पावओ क्खु एसो वअणोवण्णासो।

**शार्ङ्गरवः**—कथमिदं नाम। भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते
तदप्रियापि प्रमदा स्वबन्धुभिः॥ १७॥

**राजा**—किं चात्रभवती मया परिणीतपूर्वा।

**शकुन्तला**—(सविषादम्। आत्मगतम्।) हिअअ। संपदं दे आसङ्का।

**शार्ङ्गरवः**—

किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः।

**राजा**—कुतोऽयमसत्कल्पनाप्रश्नः।

---

१ आर्ये। किमपि वक्तुकामास्मि। न मे वचनावसरोऽस्ति। कथमिति।
नावेक्षितो गुरुजनोऽनया न त्वयापि पृष्ठो बन्धुः।
एकैकमेवं चरिते किं भणतु एक एकस्य॥

२ किं नु खल्वार्यपुत्रो भणति।

३ पावकः खल्वेष वचनोपन्यासः।

४ हृदय। साम्प्रतं त आशङ्का।

शार्ङ्गरवः—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १८ ॥

राजा—विशेषेणाधिक्षिप्तोऽस्मि।

गौतमी—[1]जादे। मुहुत्तअं मा लज्ज। अवणइस्सं दाव दे ओउण्ठणं। तदो तुमं भट्टा अहिंजाणिस्सदि। (इति यथोक्तं करोति।)

राजा—( शकुन्तलां निर्वर्ण्य। आत्मगतम्।)

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन्।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न खलु च परिभोक्तुं नैव शक्नोमि हातुम् ॥ १९ ॥

( इति विचारयन्स्थितः। )

प्रतीहारी—[2]अहो धम्मावेक्खिआ भट्टिणो। ईदिसं णाम सुहोबणदं रूबं देक्खिअ को अण्णो विआरेदि।

शार्ङ्गरवः—भो राजन्। किमिति जोषमास्यते।

राजा—भोस्तपोधनाः। चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि। तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये।

शकुन्तला—( अपवार्य। ) [3]अज्जउत्तस्स परिणए एव्व संदेहो। कुदो दाणिं मे दूराहिरोहिणी आसा।

शार्ङ्गरवः—मा तावत्।

कृताभिमर्षामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः।

---

१ जाते। मुहूर्तं मा लज्जस्व। अपनेष्यामि तावत्तेऽवगुण्ठनम्। ततस्त्वां भर्ताभिज्ञास्यति।

२ अहो धर्मावेक्षिता भर्तुः। ईदृशं नाम सुखोपनतं रूपं प्रेक्ष्य कोऽन्यो विचारयति।

३ आर्यपुत्रस्य परिणय एव संदेहः। कुत इदानीं मे दूराधिरोहिण्याशा।

मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

**शारद्वतः**—शार्ङ्गरव । विरम त्वमिदानीम् । शकुन्तले । वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् ।

**शकुन्तला**—( अपवार्य । ) [1]इमं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमराविदेण । अत्ता दाणिं मे सोअणीओत्ति ववसिदं । ( प्रकाशम् । ) अज्जउत्त– ( इत्यर्धोक्ते । ) संसइदे दाणिं परिणए ण एसो समुदाआरो । पोरव । ण जुत्तं णाम दे तह पुरा अस्समपदे सहावुत्ताणहिअअं इमं जणं समअपुव्वं पतारिअ ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं ।

**राजा**—( कर्णौ पिधाय । ) शान्तं पापम् ।

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥

**शकुन्तला**—[2]होदु । जइ परमत्थतो परपरिग्गहसङ्किणा तुए एव्वं पउत्तं । ता अहिण्णाणेण इमिणा तुह आसङ्कं अवणइस्सं ।

**राजा**—उदारः कल्पः ।

**शकुन्तला**—( मुद्रास्थानं परामृश्य । ) [3]हद्धी हद्धी । अङ्गुलीअअसुण्णा मे अङ्गुली । ( इति सविषादं गौतमीमवेक्षते । )

---

१ इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन । आत्मेदानीं मे शोचनीय इति व्यवसितम् । संशयित इदानीं परिणये नैष समुदाचारः । पौरव । न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याचष्टुम् ।

२ भवतु । यदि परमार्थतः परपरिग्रहणशङ्किना त्वयैवं प्रवृत्तम् । तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि ।

३ हा धिक् हा धिक् । अङ्गुलीयकशून्या मेऽङ्गुलिः ।

गौतमी—[1]णूणं दे सक्कावदारब्भन्तरे सचीतित्थसलिलं वन्दमाणाए पब्भट्ठं अङ्गुलीअअं ।

राजा—( सस्मितम् । ) इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

शकुन्तला—[2]एत्थ दाव विहिणा दंसिदं पहुत्तणं । अवरं दे कहिस्सं ।

राजा—श्रोतव्यमिदानीं संवृत्तम् ।

शकुन्तला—[3]णं एक्कदिअहे णोमालिआमण्डवे णलिणीपत्तभाअणगअं उअअं तुह हत्थे सण्णिहिदं आसि ।

राजा—शृणुमस्तावत् ।

शकुन्तला—[4]तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिओ । तुए अअं दाव पढमं पिअउत्ति अणुअम्पिणा उवच्छन्दिदो उअएण । ण उण दे अपरिचआदो हत्थब्भासं उवगदो । पच्छा तस्सिं एव्व मए गहिदे सलिले णेण किदो पणओ । तदा तुमं इत्थं पहसिदोसि । सव्वो सगन्धेसु विस्ससिदि । दुवेवि एत्थ आरण्णआत्ति ।

राजा—एवमादिभिरात्मकार्यनिर्वर्त्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः ।

---

१ नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

२ अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

३ नन्वेकदिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितमासीत् ।

४ तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन । न पुनस्तेऽपरिचयाद्धस्ताभ्यासमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः । तदा त्वमित्थं प्रहसितोऽसि । सर्वः सगन्धेषु विश्वसिति । द्वावप्यत्रारण्यकाविति ।

**गौतमी**— महाभाअ । ण अरुहसि एव्वं मन्तिदुं । तवोवणसंवड्ढिदो अणाभिण्णो अअं जणो कइदवस्स ।[1]

**राजा**— तापसवृद्धे ।

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥

**शकुन्तला**—( सरोषम् । ) अणज्ज[2] । अत्तणो हिअआणुमाणेण पेक्खसि । को दाणिं अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदं पडिवदिस्सदि ।

**राजा**—( आत्मगतम् । ) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहःप्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥

( प्रकाशम् । ) भद्रे । प्रथितं दुष्यन्तस्य चरितम् । तथापीदं न लक्षये ।

**शकुन्तला**—सुट्ठु[3] दाव अत्त सच्छन्दचारिणी किदह्मि । जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअट्ठिअविसस्स हत्थब्भासं उवगदा । ( इति पटान्तेन मुखमावृत्य रोदिति । )

**शार्ङ्गरवः**—इत्थमात्मकृतमप्रतिहतं चापलं दहति ।

---

१ महाभाग । नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य ।

२ अनार्य । आत्मनो हृदयानुमानेन प्रेक्षसे । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतं प्रतिपत्स्यते ।

३ सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि । याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्यासमुपगता ।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥

**राजा**—अयि भोः । किमत्रभवतीप्रत्ययादेवास्मान्संभृतदोषैरधिक्षिपथ ।

**शार्ङ्गरवः**—( सासूयम् । ) श्रुतं भवद्भिरधरोत्तरम् ।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ २५ ॥

**राजा**—भोः सत्यवादिन् । अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसंधाय लभ्यते ।

**शार्ङ्गरवः**—विनिपातः ।

**राजा**—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयमेतत् ।

**शारद्वतः**—शार्ङ्गरव । किमुत्तरेण । अनुष्ठितो गुरोः संदेशः । प्रतिनिवर्तामहे वयम् । ( राजानं प्रति । )

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥

गौतमि । गच्छाग्रतः ।

( इति प्रस्थिताः । )

**शकुन्तला**—कहं इमिणा किदवेण विप्पलद्धह्मि । तुह्मेवि मं परिदेविणिं परिच्चअह । ( इत्यनुप्रतिष्ठते । )

**गौतमी**—( स्थित्वा । ) वच्छ सङ्गरव । अणुगच्छादि इअं क्खु

---

१ कथमनेन कितवेन विप्रलब्धास्मि । यूयमपि मां परिदेविनीं परित्यज्यथ ।

२ वत्स शार्ङ्गरव । अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्री करिष्यति ।

णो करुणपरिदेविणी सउन्दला । पच्चादेसपरुसे भत्तुणि किं वा मे पुत्तिआ करिस्सदि ।

**शार्ङ्गरवः**—( सरोषं निवृत्य । ) किं पुरोभागिनि । स्वातन्त्र्यमवलम्बसे ।

( शकुन्तला भीता वेपते । )

**शार्ङ्गरवः**—शकुन्तले ।

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २७ ॥

तिष्ठ । साधयामो वयम् ।

**राजा**—भोस्तपस्विन् । किमत्रभवतीं विप्रलभसे । कुतः ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥

**शार्ङ्गरवः**—यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवान् । तदा कथमधर्मभीरुः ।

**राजा**—भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

**पुरोहितः**—( विचार्य । ) यदि तावदेवं क्रियताम् ।

**राजा**—अनुशास्तु मां भवान् ।

**पुरोहितः**—अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् । त्वं साधुभिरुद्दिष्टः । प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति । अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

राजा—यथा गुरुभ्यो रोचते ।

पुरोहितः—वत्से । अनुगच्छ माम् ।

शकुन्तला—[1]भअवदि वसुहे । देहि मे विवरं । (इति रुदन्ती प्रस्थिता । निष्क्रान्ता सह पुरोधसा सह तपस्विभिश्च ।)

( राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति । )

( नेपथ्ये । )

आश्चर्यम् ।

राजा—( आकर्ण्य । ) किं नु खलु स्यात् ।

( प्रविश्य । )

पुरोहितः—( सविस्मयम् । ) देव । अद्भुतं खलु संवृत्तम् ।

राजा—किमेवम् ।

पुरोहितः—देव । परावृत्तेषु कण्वशिष्येषु

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

राजा—किं च ।

पुरोहितः—

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-
दुत्क्षिप्यैनां ज्योतिरेकं जगाम ॥ ३० ॥

( सर्वे विस्मयं रूपयन्ति । )

राजा—भगवन् । प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवान् ।

पुरोहितः—( विलोक्य । ) विजयस्व । ( इति निष्क्रान्तः । )

राजा—वेत्रवति । पर्याकुलोऽस्मि । शयनभूमिमार्गमादेशय ।

प्रतीहारी—[2]इदो इदो देवो । ( इति प्रस्थिता । )

राजा—

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।

---

१ भगवति वसुधे । देहि मे विवरम् ।

२ इत इतो देवः ।

बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् ॥ ३१ ॥

( इति निष्क्रान्ताः सर्वे । )

इति पञ्चमोऽङ्कः ।

---

## ॥ प्रवेशकः ॥

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च । )

रक्षिणौ—( ताडयित्वा । ) [1]अले कुम्भिलआ । कहेहि । कहिं तुए एशे मणिबन्धणुक्किण्णणामहेए लाअकीए अङ्गुलीअए शमाशादिए ।

पुरुषः—( भीतिनाटितकेन । ) [2]पशीदन्ते भावमिश्शे । अहके ण ईदिशकम्मकाली ।

प्रथमः—[3]किं क्खु शोहणे बह्मणेत्ति कलिअ रण्णा पडिग्गहे दिण्णे ।

पुरुषः—[4]शुणुह दाणिं । अहके शक्कावदालब्भन्तलवाशी धीवले ।

द्वितीयः—[5]पाडच्चला । किं अह्मेहिं जादी पुच्छिदा ।

श्यालः—[6]सूअअ । कहेदु सव्वं अणुक्कमेण । मा णं अन्तरा पडिबन्धह ।

उभौ—[7]जं आवुत्ते आणवेदि । कहेहि ।

---

१ अरे कुम्भिलक । कथय । कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ।

२ प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

३ किं खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः ।

४ शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः ।

५ पाटच्चर । किमस्माभिर्जातिः पृष्टा ।

६ सूचक । कथयतु सर्वमनुक्रमेण । मैनमन्तरा प्रतिबध्नीतम् ।

७ यदावुत्त आज्ञापयति । कथय ।

पुरुषः—अहके जालुग्गालादीहिं मच्छबन्धणोबाएहिं कुडुम्बभलणं कलेमि।
श्यालः—( विहस्य। ) विसुद्धो दाणिं आजीवो।
पुरुषः—भट्टा। मा एव्वं भण।
शहजे किल जे विणिन्दिए ण हु दे कम्म विवज्जणीअए।
पशुमालणकम्मदालुणे अणुकम्पामिदु एव्व शोत्तिए॥ १॥
श्यालः— तदो तदो।
पुरुषः— एक्कशिं दिअशे खण्डशो लोहिअमच्छे मए कप्पिदे जाव। तश्श उदलब्भन्तले एदं लदणभाशुलं अङ्गुलीअअं देक्खिअं। पच्छा अहके शे विक्कआअ दंशअन्ते गहिदे भावमिश्शेहिं। मालेह वा। मुञ्चेह वा। अअं शे आअमवुत्तन्ते।
श्यालः— जाणुअ। विस्सगन्धी गोहादी मच्छबन्धो एव्व णिस्संसअं। अङ्गुलीअअदंसणं से विमरिसिदव्वं। राअउलं एव्व गच्छामो।
रक्षिणौ— तह। गच्छ अरे गण्ठिभेदअ।
( सर्वे परिक्रामन्ति। )

---

१ अहं जालोद्गारादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि।
२ विशुद्ध इदानीमाजीवः।
३ भर्तः। मैवं भण।
सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम्।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः॥
४ ततस्ततः।
५ एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत्। तस्य उदराभ्यन्तर एतद्रत्नभासुरमङ्गुलीयकं दृष्टम्। पश्चादहमस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः। मारयत वा। मुञ्चत वा। अयमस्यागमवृत्तान्तः।
६ जानुक। विस्रगन्धिर्गोघाती मत्स्यबन्ध एव निःसंशयम्। अङ्गुलीयकदर्शनमस्य विमर्ष्टव्यम्। राजकुलमेव गच्छामः।
७ तथा। गच्छ अरे ग्रन्थिभेदक।

श्यालः— सूअअ । इमं पुरदुआरे अप्पमत्ता पडिबालह । जाव इमं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कमामि ।

उभौ— पविशदु आवुत्ते शामिपशादश्श ।

( इति निष्क्रान्तः श्यालः । )

प्रथमः— जाणुअ । चिलाअदि क्खु आवुत्ते ।

द्वितीयः— णं अवशलोवशप्पणीआ लाआणो ।

प्रथमः— जाणुअ । फुलन्ति मे हत्था इमश्श बज्झश्श शुमणो पिणद्धुं ।( इति पुरुषं निर्दिशति । )

पुरुषः— ण अलुहदि भावे अकालणमालणे भविदुं ।

द्वितीयः— ( विलोक्य । ) एशे अह्माणं शामी पत्तहत्थे लाअशाशणं पडिच्छिअ इदोमुहे देक्खीअदि । गिद्धबली भविश्शशि । शुणो मुहं वा देक्खिश्शशि ।

( प्रविश्य । )

श्यालः—सूअअ । मुञ्चेदु एसो जालोअजीवी । उववण्णो किल अअं अङ्गुलीअअस्स आअमो ।

---

१ सूचक । इमं पुरद्वारेऽप्रमत्तौ प्रतिपालयतम् । यावदिदमङ्गुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीष्य निष्क्रमामि ।

२ प्रविशत्वावुत्तः स्वामिप्रसादाय ।

३ जानुक । चिरायति खल्वावुत्तः ।

४ नन्ववसरोपसर्पणीया राजानः ।

५ जानुक । स्फुरतो मे हस्तावस्य वध्यस्य सुमनः पिनद्धुम् ।

६ नार्हति भावोऽकारणमारणो भवितुम् ।

७ एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीष्येतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि । शुनो मुखं वा द्रक्ष्यसि ।

८ सूचक । मुच्यतामेष जालोपजीवः । उपपन्नः किलायमङ्गुलीयकस्यागमः ।

**सूचकः**—[1]जह आवुत्ते भणादि ।

**द्वितीयः**—[2]ऐशे जमशदणं पविशिअ पडिणिवुत्ते । ( इति पुरुषं परिमुक्तबन्धनं करोति । )

**पुरुषः**—( श्यालं प्रणम्य । ) भट्टा[3] । अह कीलिशे मे आजीवे ।

**श्यालः**—[4]ऐस भट्टिणा अङ्गुलीअअमुल्लसाम्मिदो पसादोबि दाबिदो । ( इति पुरुषायार्थं प्रयच्छति । )

**पुरुषः**—( सप्रणामं प्रतिगृह्य । ) [5]भट्टकेण अणुग्गहिदह्मि ।

**सूचकः**—[6]ऐशे णाम अणुग्गहिदे जे शूलादो अवदालिअ हत्थिक्कन्धे पडिट्ठाबिदे ।

**जानुकः**—[7]आवुत्त । पालिदोशिअं कहेदि । तेण अङ्गुलीअएण भट्टिणो शम्मदेण होदव्वं ।

**श्यालः**—[8]ण तस्सिं महारुहं रदणं भट्टिणो बहुमदंत्ति तक्केमि । तस्स दंसणेण भट्टिणो अभिमदो जणो सुमरिदो । मुहुत्तअं पकिदिगम्भीरोबि पज्जुस्सुअमणो आसि ।

**सूचकः**—[9]शेविदं णाम आवुत्तेण ।

---

१ यथावुत्तो भणति ।
२ एष यमसदनं प्रविश्य प्रतिनिवृत्तः ।
३ भर्त्तः । अथ कीदृशो म आजीवः ।
४ एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः ।
५ भर्त्रानुगृहीतोऽस्मि ।
६ एष नामानुग्रहीतो यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।
७ आवुत्त । पारितोषिकं कथयति । तेनाङ्गुलीयकेण भर्तुः संमतेन भवितव्यम् ।
८ न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्तुरभिमतो जनः स्मृतः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत् ।
९ सेवितं नामावुत्तेन ।

जानुकः—[1]णं भणाहि। इमश्श कए मच्छिआभत्तुणोत्ति।( इति पुरुषमसूयया पश्यति। )

पुरुषः—[2]भट्टालके। इदो अद्धं तुह्माणं शुमणोमुल्लं होदु।

जानुकः—[3]ऐत्तके जुज्जइ।

श्यालः—[4]धीवर। महत्तरो-तुमं पिअवअस्सको दाणिं मे संवुत्तो। कादम्बरीसक्खिअं अह्माणं पढमसोहिदं इच्छीअदि। ता सोण्डिआपणं एव्व गच्छामो।

सर्वे—[5]तह।

( इति निष्क्रान्ताः सर्वे। )

इति प्रवेशकः।

---

## ॥ षष्ठोऽङ्कः ॥

( ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः। )

सानुमती—[6]णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं। जाव साहुजणस्स अभिसेअकालोत्ति संपदं इ-

---

१ ननु भण। अस्य कृते मत्स्यिकाभर्तुरिति।

२ भट्टारकाः। इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु।

३ एतावद्युज्यते।

४ धीवर। महत्तरस्त्वं प्रियवयस्य इदानीं मे संवृत्तः। कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते। तच्छौण्डिकापणमेव गच्छामः।

५ तथा।

६ निर्वर्तितं मया पर्यायनिर्वर्त्तनीयमप्सरस्तीर्थसान्निध्यम्। यावत्साधुजनस्याभिषेककाल इति सांप्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि। ननु मेनकासंबन्धेन शरीरभूतेदानीं मे शकुन्तला। तया च दुहितृनिमित्तमादिष्टपूर्वास्मि। किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिवैतद्राजकुलं दृश्यते। अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम्। किंतु सख्या आदरो मया मानयितव्यः। भवतु। अनयोरेवोद्यानपालिकयोस्तिरस्करिणीपरिच्छन्ना पार्श्वपरिवर्त्तिनी भूत्वोपलप्स्ये।

मस्स राएसिणो उदन्तं पच्चक्खीकरिस्सं । णं मेणआसंबन्धेण सरीरभूदा दाणिं मे सउन्दला । ताए अ दुहिदुणिमित्तं आदिट्ठपुव्वह्मि । ( समन्तादवलोक्य । ) किं णु क्खु उदुच्छवेबि णिरुच्छवारम्भं विअ एदं राअउलं दीसइ । अत्थि मे विहवो पणिधाणेण सव्वं परिण्णादुं । किंदु सहीए आद्दरो मए माणइदव्वो । होदु । इमाणं एव्व उज्जाणपालिआणं तिरक्खरिणीपरिच्छण्णा पस्सपरिवत्तिणी भविअ उवलम्भिस्सं । ( इति नाट्येनावतीर्य स्थिता । )

( ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः । )

**प्रथमा**—

[1]आअम्बहरिअपण्डुर वसन्तमासस्स जीअसव्वस्स ।
दिट्ठोसि चूदकोरअ उदुमङ्गलं तुमं पसाएमि ॥ १ ॥

**द्वितीया**—[2]परहुदिए । किं एआइणी मन्तेसि ।

**प्रथमा**—[3]महुअरिए । चूदकलिअं देक्खिअ उम्मत्तिआ परहुदिआ होदि ।

**द्वितीया**—( सहर्षं त्वरयोपगम्य । ) [4]कहं उवट्ठिदो महुमासो ।

**प्रथमा**—[5]महुअरिए । तव दाणिं कालो एसो मदविब्भमगीदाणं ।

**द्वितीया**—[6]सहि । अवलम्ब मं । जाव अग्गपादट्ठिआ भविअ चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि ।

---

१ आताम्रहरितपाण्डुर वसन्तमासस्य जीवसर्वस्व ।
दृष्टोऽसि चूतकोरक ऋतुमङ्गलं त्वां प्रसादयामि ॥

२ परभृतिके । किमेकाकिनी मन्त्रयसे ।

३ मधुकरिके । चूतकलिकां दृष्ट्वोन्मत्ता परभृतिका भवति ।

४ कथमुपस्थितो मधुमासः ।

५ मधुकरिके । तवेदानीं काल एष मदविभ्रमगीतानाम् ।

६ सखि । अवलम्बस्व माम् । यावदग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि ।

**प्रथमा**—[1]जइ ममवि क्खु अद्धं अच्चणफलस्स ।

**द्वितीया**—[2]अकहिदेवि एदं संपज्जइ । जदो एक्कं एव्व णो जीविदं । दुधाट्ठिदं सरीरं । ( सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति । ) अए । अप्पडिबुद्धोवि चूदप्पसवो एत्थ बन्धणभङ्गसुरभी होदि । ( इति कपोतहस्तकं कृत्वा । )

तुंसि मए चूदङ्कुर दिण्णो कामस्स गहिदधणुअस्स ।
पहिअजणजुवइलक्खो पञ्चब्भहिओ सरो होहि ॥ २ ॥

( इति चूताङ्कुरं क्षिपति । )

( प्रविश्य पटाक्षेपेण कुपितः । )

**कञ्चुकी**—मा तावदनात्मज्ञे । देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्रकलिकाभङ्गं किमारभसे ।

**उभे**—( भीते । ) [3]पसीददु अज्जो । अग्गहीदत्थाओ वअं ।

**कञ्चुकी**—न किल श्रुतं युवाभ्याम् । यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च । तथाहि

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरुबकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ३ ॥

**उभे**—[4]णत्थि संदेहो । महप्पहाओ राएसी ।

---

१ यदि ममापि खल्वर्धमर्चनफलस्य ।

२ अकथितेऽप्येतत्संपद्यते । यत एकमेव नौ जीवितम् । द्विधास्थितं शरीरम् । अये । अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति ।

त्वमसि मया चूताङ्कुर दत्तः कामस्य गृहीतधनोः ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥

३ प्रसीदत्वार्यः । अगृहीतार्थे आवाम् ।

४ नास्ति संदेहः । महाप्रभावो राजर्षिः ।

**प्रथमा**—अज्ज[1]। कति दिअहाइं अह्माणं मित्तावसुणा रट्ठिएण भट्टिणो पाअमूलं पेसिदाणं। इत्थं च णो पमदवणस्स पालणकम्म समप्पिदं। ता आअन्तुअदाए अस्सुदपुव्वो अह्मेहिं एसो वुत्तन्तो।

**कञ्चुकी**—भवतु। न पुनरेवं प्रवर्तितव्यम्।

**उभे**—अज्ज[2]। कोदूहलं णो। जइ इमिणा जणेण सोदव्वं कहेदु भअं। किंणिमित्तं भट्टिणा वसन्तूस्सवो पडिसिद्धो।

**सानुमती**—उस्सवप्पिआ[3] क्खु मणुस्सा। गरुणा कारणेण होदव्वं।

**कञ्चुकी**—बहुलीभूतमेतत्किं न कथ्यते। किमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनम्।

**उभे**—सुदं[4] रट्ठिणो मुहादो जाव अङ्गुलीअअदंसणं।

**कञ्चुकी**—तेन ह्यल्पं कथयितव्यम्। यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मया तत्रभवती रहसि शकुन्तला मोहात्प्रत्यादिष्टेति तदाप्रभृत्येव पश्चात्तापमुपगतो देवः। तथाहि

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम्॥ ४॥

---

१ आर्ये। कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भर्तुः पादमूलं प्रेषितयोः। इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितम्। तदागन्तुकतयाश्रुतपूर्व आवाभ्यामेष वृत्तान्तः।

२ आर्य। कौतूहलं नौ। यद्यनेन जनेन श्रोतव्यं कथयतु भवान्। किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः।

३ उत्सवप्रियाः खलु मनुष्याः। गुरुणा कारणेन भवितव्यम्।

४ श्रुतं राष्ट्रियस्य मुखाद्यावदङ्गुलीयकदर्शनम्।

**सानुमती**—[1]पिअं मे ।

**कञ्चुकी**—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः ।

**उभे**—[2]जुज्जइ ।

( नेपथ्ये । )

[3]एदु एदु भवं ।

**कञ्चुकी**—( कर्णं दत्त्वा । ) अये । इत एवाभिवर्त्तते देवः । स्व-कर्मानुष्ठीयताम् ।

**उभे**—[4]तह । ( इति निष्क्रान्ते । )

( ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च । )

**कञ्चुकी**—( राजानमवलोक्य । ) अहो सर्वास्ववस्थासु रमणीयत्व-माकृतिविशेषाणाम् । एवमुत्सुकोऽपि प्रियदर्शनो देवः । तथाहि

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासापरक्ताधरः ।
चिन्ताजागरणप्रताम्रनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥५॥

**सानुमती**—( राजानं दृष्ट्वा । ) [5]ठाणे क्खु पच्चादेसविमाणिदा-वि इमस्स किदे सउन्दला किलम्मादि ।

**राजा**—( ध्यानमन्दं परिक्रम्य । )

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ६ ॥

**सानुमती**—[6]णं ईदिसाणि तवस्सिणीए भाअहेआणि ।

---

१ प्रियं मे ।
२ युज्यते ।
३ एतु एतु भवान् ।
४ तथा ।
५ स्थाने खलु प्रत्यादेशविमानिताप्यस्य कृते शकुन्तला क्लाम्यति ।
६ नन्वीदृशानि तपस्विन्या भागधेयानि ।

**विदूषकः**—( अपवार्य । ) लंङ्घिदो एसो भूओबि सउन्दलावाहिणा । ण आणे । कहं चिकिच्छिदव्वो भविस्सदित्ति ।

**कञ्चुकी**—( उपगम्य । ) जयतु जयतु देवः । महाराज । प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि महाराजः ।

**राजा**—वेत्रवति । मद्वचनादमात्यमार्यपिशुनं ब्रूहि । चिरप्रबोधान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्यमार्येण । तत्पत्रमारोप्य दीयतामिति ।

**प्रतीहारी**—[2]जं देवो आणवेदि । ( इति निष्क्रान्ता । )

**राजा**—वातायन । त्वमपि स्वं नियोगमशून्यं कुरु ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

**विदूषकः**—[3]किदं भवदा णिम्मच्छिअं । संपदं सिसिरातबच्छेअरमणीए इमस्सिं पमदवणुद्देशे अत्ताणं रमइस्ससि ।

**राजा**—वयस्य । रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तदव्यभिचारि वचः । कुतः ।

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥ ७ ॥

**विदूषकः**—[4]चिट्ठ दाव । जाव इमिणा दण्डकट्ठेण कन्दप्पबाणं णासइस्सामि । ( इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति । )

---

१ लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना । न जाने । कथं चिकित्सितव्यो भविष्यतीति ।

२ यद्देव आज्ञापयति ।

३ कृतं भवता निर्मक्षिकम् । सांप्रतं शिशिरातपच्छेदरमणीयेऽस्मिन्प्रमदवनोद्देशे आत्मानं रमयिष्यसि ।

४ तिष्ठ तावत् । यावदनेन दण्डकाष्ठेन कंदर्पबाणं नाशयिष्यामि ।

**राजा**—( सस्मितम् । ) भवतु । दृष्टं ब्रह्मवर्चसम् । सखे । क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ।

**विदूषकः**—[1]णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा । माहवीमण्डवे इमं वेलं अदिवाहिस्सं । तहिं मे चित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउन्दलाए पडिकिदिं आणेहित्ति ।

**राजा**—ईदृशं हृदयविनोदस्थानम्?। तत्तमेव मार्गमादेशय ।

**विदूषकः**—[2]इदो इदो भवं ।

( उभौ परिक्रामतः । सानुमत्यनुगच्छति । )

**विदूषकः**—[3]एसो मणिसिलापट्टअसणाहो माहवीमण्डवो उवहाररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छदि । ता पविसिअ णिसीददु भवं ।

( उभौ प्रवेशं कृत्वोपविष्टौ । )

**सानुमती**—[4]लदासंस्सिदा देक्खिस्सं दाव सहीए पडिकिदिं । तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सं । (इति तथा कृत्वा स्थिता ।)

**राजा**—सखे । सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम् । कथितवानस्मि भवते । स भवान्प्रत्यादेशवेलायां मत्समीपमुपगतो नासीत् । पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम्?।

---

१ नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा । माधवीमण्डप इमां वेलामतिवाहयिष्यामि । तस्मिन्मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति ।

२ इत इतो भवान् ।

३ एष मणिशिलापट्टकसनाथो माधवीमण्डप उपहाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति । तत्प्रविश्य निषीदतु भवान् ।

४ लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमतमनुरागं निवेदयिष्यामि ।

**विदूषकः**—ण विसुमरामि । किंतु सव्वं कहिअ अवसाणे उण तुए परिहासविअप्पओ एसो ण भूदत्थोत्ति आचक्खिदं । मएवि मिप्पिण्डबुद्धिणा तह एव्व गहीदं । अहवा भविदव्वदा बलवदी ।

**सानुमती**—एव्वं णेदं ।

**राजा**— ( ध्यात्वा । ) सखे । त्रायस्व माम् ।

**विदूषकः**— भो । किं एदं । अणुववण्णं क्खु ईदिसं तुइ । कदाचि सप्पुरिसा सोअपत्तप्पाणो ण होन्ति । णं पवादेवि णिक्कम्प गिरीओ ।

**राजा**—वयस्य । निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ८ ॥

**सानुमती**—अम्महे । ईदिसी सकज्जपरदा । इमस्स संदावेण अहं रमामि ।

**विदूषकः**— भो । अत्थि मे तक्को । केणवि तत्तहोदी आआसचारिणा णीदेत्ति ।

---

१ न विस्मरामि । किंतु सर्वं कथयित्वावसाने पुनस्त्वया परिहासविजल्प एष न भूतार्थ इत्याचक्षितम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता बलवती ।

२ एवं न्वेतत् ।

३ भोः । किमेतत् । अनुपपन्नं खल्वीदृशं त्वयि । कदाचित्सत्पुरुषाः शोकपात्रात्मानो न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः ।

४ अहो । ईदृशी स्वकार्यपरता । अस्य संतापेनाहं रमे ।

५ भोः । अस्ति मे तर्कः । केनापि तत्रभवत्याकाशचारिणा नीतेति ।

राजा— कः पतिदेवतामन्यः परिमार्ष्टुमुत्सहेत । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

सानुमती— [1]संमोहो क्खु विह्मअणिज्जो ण पडिबोहो ।

विदूषकः— [2]जइ एव्वं । अत्थि क्खु समाअमो कालेण तत्तहोदीए ।

राजा— कथमिव ।

विदूषकः— [3]ण क्खु मादापिदरा भत्तुविओअदुक्खिअं दुहिदरं देक्खिदुं पारेन्ति ।

राजा— वयस्य ।

स्वप्नो नु माया नु मतिभ्रमो नु
क्लिष्टं नु तावत्फलमेव पुण्यम् ।
असन्निवृत्त्यै तदतीतमेव
मनोरथानामतटप्रपातः ॥ ९ ॥

विदूषकः— [4]मा एव्वं । णं अङ्गुलीअअं एव्व णिदंसणं । अवस्संभाविणो अचिन्तणिज्जो समाअमो होदित्ति ।

राजा— ( अङ्गुलीयकं विलोक्य । ) अये । इदं तावदसुलभस्थानभ्रंशि शोचनीयम् ।

तव सुचरितमङ्गुलीय नूनं
प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोरमासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ १० ॥

---

१ संमोहः खलु विस्मयनीयो न प्रतिबोधः ।

२ यद्येवम् । अस्ति खलु समागमः कालेन तत्रभवत्या ।

३ न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः ।

४ मैवम् । नन्वङ्गुलीयकमेव निदर्शनम् । अवश्यंभाविनोऽचिन्तनीयः समागमो भवतीति ।

**सानुमती**— [1]जइ अण्णहत्थगदं भवे । सच्चं एव्व सोअणिज्जं भवे ।

**विदूषकः**— [2]भो । इअं णाममुद्दा केण उद्देसेण तत्तहोदीए हत्थसंसग्गं पाविदा ।

**सानुमती**— [3]ममवि कोदूहलेण आआरिदो एसो ।

**राजा**— श्रूयताम् । तदा स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह । कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति ।

**विदूषकः**— [4]तदो तदो ।

**राजा**— पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता ।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम् ।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥ ११ ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम् । ०

**सानुमती**— [5]रमणीओ क्खु अवही विहिणा विसंवादिदो ।

**विदूषकः**— [6]कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भन्तले आसि ।

**राजा**— शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् ।

---

१ यद्यन्यहस्तगतं भवेत् । सत्यमेव शोचनीयं भवेत् ।
२ भोः । इयं नाममुद्रा केनोद्देशेन तत्रभवत्या हस्तसंसर्गं मापिता ।
३ ममापि कौतूहलेनाकारित एषः ।
४ ततस्ततः ।
५ रमणीयः खल्ववधिर्विधिना विसंवादितः ।
६ कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत् ।

विदूषकः—[1]जुज्जइ ।

सानुमती—[2]अदो एव्व तवस्सिणीए सउन्दलाए अधम्मभीरुणो इमस्स राएसिणो परिणए संदेहो आसि । अहवा । ईदिसो अणुराओ अहिण्णाणं अवेक्खदि । कहं विअ एदं ।

राजा—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

विदूषकः—(आत्मगतम् ।) [3]गहीदो णेण पन्था उम्मत्तआणं ।

राजा—

कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि ।

अथवा ।

अचेतनं नाम गुणं न लक्षये-
न्मयैव कस्मादवधीरिता प्रिया ॥ १२ ॥

विदूषकः—(आत्मगतम् ।) [4]कहं बुभुक्खाए खादिदव्वोह्मि ।

राजा—अकारणपरित्यक्ते । अनुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

(प्रविश्य पटाक्षेपेण चित्रफलकहस्ता ।)

चतुरिका—[5]इअं चित्तगदा भट्टिणी । (इति चित्रफलकं दर्शयति ।)

विदूषकः—[6]साहु वअस्स । महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो । खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसु ।

१ युज्यते ।

२ अतएव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेह आसीत् । अथवा । ईदृशोऽनुरागोऽभिज्ञानमपेक्षते । कथमिवैतत् ।

३ गृहीतोऽनेन पन्था उन्मत्तानाम् ।

४ कथं बुभुक्षया खादितव्योऽस्मि ।

५ इयं चित्रगता भर्त्री ।

६ साधु वयस्य । मधुरावस्थानदर्शनीयो भावानुप्रवेशः । स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु ।

**सानुमती**— [1]अम्मो एसा राएसिणो णिउणदा । जाणे । सही अग्गदो मे वट्टदित्ति ।

**राजा**—

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किंचिदन्वितम् ॥ १३ ॥

**सानुमती**— [2]सेरिसं एव्वं पच्छादाबगरुणो सिणेहस्स अणवलेबस्स अ ।

**विदूषकः**— [3]भो । दाणिं तिण्णि तत्तहोदीओ दीसन्ति । सव्वाओ अ दंसणीआओ । कदमा एत्थ तत्तहोदी सउन्दला ।

**सानुमती**— [4]अणभिण्णो क्खु ईदिसस्स रूबस्स मोहदिट्ठी अअं जणो ।

**राजा**— त्वं तावत्कतमां तर्कयसि ।

**विदूषकः**— [5]तक्केमि । जा एसा सिढिलकेसबन्धणुव्वन्तकुसुमेण केसन्तेण उब्भिण्णस्सेअबिन्दुणा वअणेण विसेसदो ओसरिआहिं बाहाहिं अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअबस्स पासे इसिपरिस्सन्ता विअ आलिहिदा । एसा सउन्दला । इदराओ सहीओत्ति ।

---

१ अहो एषा राजर्षेर्निपुणता । जाने । सख्यग्रतो मे वर्तत इति ।

२ सदृशमेवं पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च ।

३ भोः । इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते । सर्वाश्च दर्शनीयाः । कतमात्र तत्रभवती शकुन्तला ।

४ अनभिज्ञः खल्वीदृशस्य रूपस्य मोघदृष्टिरयं जनः ।

५ तर्कयामि । यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता । एषा शकुन्तला । इतरे सख्याविति ।

**राजा**— निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् ।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।

अश्रु च कपोलपतितं दृश्यमिदं वर्णिकोच्छ्वासात् ॥ १४ ॥

चतुरिके । अर्धलिखितमेतद्विनोदस्थानम् । तस्माद्गच्छ । वर्त्तिकां तावदानय ।

**चतुरिका**— [1]अज्ज माठव्व । अवलम्ब चित्तफलअं । जाव आअच्छामि ।

**राजा**— अहमेवैतदवलम्बे । ( इति यथोक्तं करोति । )

( निष्क्रान्ता चेटी । )

**राजा**— अहं हि

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां मुहुरिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ १५ ॥

**विदूषकः**— ( आत्मगतम् । ) [2]एसो अत्तभवं णदिं अदिक्कमिअ मिअतिण्हिआए संकन्तो । ( प्रकाशम् । ) भो । अबरं किं एत्थ लिहिदव्वं ।

**सानुमती**— [3]जो जो पदेसो सहीए मे अहिरूबो । तं तं आलिहिदुकामो भवे ।

**राजा**— श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।

---

१ आर्य माठव्य । अवलम्बस्व चित्रफलकम् । यावदागच्छामि ।

२ एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णया संक्रान्तः । भोः । अपरं किमत्र लिखितव्यम् ।

३ यो यः प्रदेशः सख्या मेऽभिरूपः । तं तमालिखितुकामो भवेत् ।

शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १६ ॥

विदूषकः—(आत्मगतम् ।) [1]जह अहं देक्खामि । पूरिदव्वं णेण चित्तफलअं लम्बकुच्चाणं तावसाणं कदम्बेहिं ।

राजा—वयस्य । अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतमत्र विस्मृतमस्माभिः ।

विदूषकः—[2]किं विअ ।

सानुमती—[3]वणवासस्स सोउमारस्स अ जं सरिसं भविस्सादि ।

राजा—

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेशरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ १७ ॥

विदूषकः—[4]भो । किंणु तत्तहोदी रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं आवारिअ चइदचइदा विअ ठिआ । (सावधानं निरूप्य । दृष्ट्वा ।) आ । एसो दासीए पुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणं अहिलङ्घदि महुअरो ।

राजा—ननु वार्यतामेष धृष्टः ।

---

१ यथाहं पश्यामि । पूरयितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः ।

२ किमिव ।

३ वनवासस्य सौकुमारस्य च यत्सदृशं भविष्यति ।

४ भोः । किं नु तत्रभवती रक्तकुवलयपल्लवशोभिनाग्रहस्तेन मुखमावार्य चकितचकितेव स्थिता । आः । एष दास्याः पुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनमभिलङ्घति मधुकरः ।

विदूषकः—[1]भवं एव्व अविणीदाणं सासिदा इमस्स वारणे पहविस्सदि ।

राजा—युज्यते । अयि भोः कुसुमलताप्रियातिथे । किमत्र परिपतनखेदमनुभवसि ।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥१८॥

सानुमती—[2]अज्ज अभिजादं क्खु एसो वारिदो ।

विदूषकः—[3]पडिसिद्धावि वामा एसा जादी ।

राजा—एवं भो न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति ।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ १९ ॥

विदूषकः—[4]एव्वं तिण्हदण्डस्स किं ण भाइस्सदि । (प्रहस्य। आत्मगतम्। ) एसो दाव उम्मत्तो । अहंपि एदस्स सङ्गेण ईदिसवअणो विअ संवुत्तो । (प्रकाशम्। ) भो । चित्तं क्खु एदं ।

राजा—कथं चित्रम् ।

सानुमती—[5]अहंपि दाणिं अणवगदत्था । किं उण जहलिहिदाणुभावी एसो ।

राजा—वयस्य । किमिदमनुष्ठितं पौरोभाग्यम् ।

---

१ भवानेवाविनीतानां शासितास्य वारणे प्रभविष्यति ।

२ अद्याभिजातं खल्वेष वारितः ।

३ प्रतिषिद्धापि वामैषा जातिः ।

४ एवं तीक्ष्णदण्डस्य किं न भेष्यति । एष तावदुन्मत्तः । अहमप्येतस्य सङ्गेनेदृशवचन इव संवृत्तः । भोः । चित्रं खल्वेतत् ।

५ अहमपीदानीमनवगतार्थी । किं पुनर्यथालिखितानुभाव्येषः ।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २० ॥

( इति बाष्पं विहरति। )

**सानुमती**—[1]पुव्वावराविरोही अपुव्वो एसो विरहमग्गो।

**राजा**—वयस्य। कथमेवमविश्रान्तदुःखमनुभवामि।

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २१ ॥

**सानुमती**—[2]सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउन्दलाए।

( प्रविश्य। )

**चतुरिका**—[3]जेदु जेदु भट्टा। वट्टिआकरण्डअं गेण्हिअ इदोमुहं पत्थिदम्हि।

**राजा**—किं च।

**चतुरिका**—[4]सो मे हत्थादो अन्तरा तरलिआदुदिआए देवीए वसुमदीए अहं एव्व अज्जउत्तस्स उबणइस्संत्ति सबलक्कारं गहिदो।

**विदूषकः**—[5]दिट्ठिआ तुमं मुक्का।

**चतुरिका**—[6]जाव देवीए विडबलग्गं उत्तरीअं तरलिआ मोचेदि। ताव मए णिव्वाहिदो अत्ता।

---

१ पूर्वापरविरोध्यपूर्व एष विरहमार्गः।

२ सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः।

३ जयतु जयतु भर्त्ता। वर्त्तिकाकरण्डकं गृहीत्वेतोमुखं प्रस्थितास्मि।

४ स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्याहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः।

५ दिष्ट्या त्वं मुक्ता।

६ यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति। तावन्मया निर्वाहित आत्मा।

**राजा**—वयस्य । उपस्थिता देवी बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षतु ।

**विदूषकः**—[1]अत्ताणंत्ति भणाहि । (चित्रफलकमादायोत्थाय च।) जइ भवं अन्तेउरकालकूडादो मुच्चीअदि । तदो मं मेहप्पडिच्छन्दे पासादे सद्दावेहि ।( इति द्रुतपदं निष्क्रान्तः । )

**सानुमती**—[2]अण्णसंकन्तहिअओवि पढमसंभावणं अवेक्खदि । अदिसिढिलसोहदो दाणिं एसो ।

(प्रविश्य पत्रहस्ता)

**प्रतीहारी**—[3]जेदु जेदु देवो ।

**राजा**—वेत्रवति । न खल्वन्तरा दृष्टा त्वया देवी ।

**प्रतीहारी**—[4]अह इं । पत्तहत्थं मं देक्खिअ पडिणिउत्ता ।

**राजा**—कार्यज्ञा कार्योपरोधं मे परिहरति ।

**प्रतीहारी**—[5]देव । अमच्चो विण्णवेदि । अत्थजादस्स गणणाबहुलदाए एक्कं एव्व पोरकज्जं अवेक्खिदं । तं देवो पत्तारूढं पच्चक्खीकरेदुत्ति ।

**राजा**—इतः पत्रिकां दर्शय ।

(प्रतिहार्युपनयति । )

**राजा**—( अनुवाच्य ।) कथम् । समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी

---

१ आत्मानमिति भण । यदि भवानन्तःपुरकालकूटान्मुच्यते । ततो मां मेघप्रतिच्छन्दे प्रासादे शब्दय ।

२ अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते । अतिशिथिलसौहृद इदानीमेषः ।

३ जयतु जयतु देवः ।

४ अथ किम् । पत्रहस्तां मां दृष्ट्वा प्रतिनिवृत्ता ।

५ देव । अमात्यो विज्ञापयति । अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितम् । तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति ।

तस्यार्थसंचय इत्येतदमात्येन लिखितम् । कष्टं खल्वनपत्यता। बहुधनत्वाद्बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यताम् । यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात् ।

**प्रतीहारी**—[1]देव । दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि ।

**राजा**—ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ । एवममात्यं ब्रूहि ।

**प्रतीहारी**—[2]जं देवो आणवेदि । ( इति प्रस्थिता । )

**राजा**—एहि तावत् ।

**प्रतीहारी**—[3]इअह्मि ।

**राजा**—किमनेन संततिरस्ति नास्तीति ।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २२ ॥

**प्रतीहारी**—[4]एव्वं णाम घोसइदव्वं । ( निष्क्रम्य । पुनः प्रविश्य । ) काले पवुट्ठं विअ अहिणन्दिदं देवस्स सासणम् ।

**राजा**—( दीर्घमुष्णं च निःश्वस्य । ) एवं भोः संततिच्छेदानिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंशश्रीरकाल इवोप्तबीजा भूरेवंवृत्ता ।

**प्रतीहारी**—[5]पडिहदं अमङ्गलम् ।

**राजा**—धिङ्मामुपस्थितश्रेयोऽवमानिनम् ।

---

१ देव । इदानीमेव साकेतकस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायास्य श्रूयते ।

२ यद्देव आज्ञापयति ।

३ इयमस्मि ।

४ एवं नाम घोषयितव्यम् । काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम् ।

५ प्रतिहतममङ्गलम् ।

सानुमती—[1]असंसअं सहिं एव्व हिअए करिअ णिन्दिदो णेण अप्पा ।

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुंधरा काल इवोप्तबीजा ॥ २३ ॥

सानुमती—[2]अपरिच्छिण्णा दाणिं दे सन्ददी भविस्सादि ।

चतुरिका—( जनान्तिकम् । ) [3]अए । इमिणा सत्थवाहवुत्तन्तेण विउणोव्वेओ भट्टा । णं अस्सासिदुं मेहप्पडिच्छन्दादो अज्जं माठव्वं गेण्हिअ आअच्छेहि ।

प्रतीहारी—[4]सुट्ठु भणासि । ( इति निष्क्रान्ता । )

राजा—अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः ।

अस्मात्परं बत यथाश्रुतिसंभृतानि
को नः कुले निवपनानि नियच्छतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २४ ॥

( इति मोहमुपागतः । )

चतुरिका—( ससंभ्रममवलोक्य । ) [5]समस्ससदु समस्ससदु भट्टा ।

---

१ असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ।

२ अपरिच्छिन्नेदानीं ते संततिर्भविष्यति ।

३ अये । अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्त्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यं माठव्यं गृहीत्वागच्छ ।

४ सुष्ठु भणसि ।

५ समाश्वसितु समाश्वसितु भर्त्ता ।

सानुमती—हद्धी हद्धी । सदि क्खु दीवे ववधाणदोसेण एसो अन्धआरदोसं अणुहोदि । अहं दाणिं एव्व णिव्वुदं करेमि । अहवा । सुदं मए सउन्दलं समस्सासअन्तीए महेन्दजणणीए मुहादो । जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्सन्ति जह अइरेण धम्मपदिणिं भट्टा अहिणन्दिस्सादित्ति । ता जुत्तं एदं कालं पडिपालिदुं । जाव इमिणा वुत्तन्तेण पिअसहिं समस्सासेमि । ( इत्युद्भ्रान्तकेन निष्क्रान्ता । )

( नेपथ्ये । )

अब्बह्मण्णं अब्बह्मण्णं ।

राजा—( प्रत्यागतप्राणः । कर्णं दत्त्वा । ) अये । माठव्यस्येवार्त्तस्वरः । कः कोऽत्र भोः ।

( प्रविश्य । )

प्रतीहारी—परित्ताअदु देवो संसअगदं वअस्सम् ।

राजा—केनात्तगन्धो माणवकः ।

प्रतीहारी—अदिट्ठरूवेण केणवि सत्तेण अदिक्कमिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोबिदो ।

राजा—( उत्थाय । ) मा तावत् । ममापि सत्वैरभिभूयन्ते गृहाः । अथवा ।

---

१ हा धिक् हा धिक् । सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारदोषमनुभवति । अहमिदानीमेव निर्वृतं करोमि । अथवा । श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात् । यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाचिरेण धर्मपत्नीं भर्त्ताभिनन्दिष्यतीति । तस्माद्युक्तमेतं कालं प्रतिपालयितुम् । यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि ।

२ अब्रह्मण्यमब्रह्मण्यम् ।

३ परित्रायतां देवः संशयगतं वयस्यम् ।

४ अदृष्टरूपेण केनापि सत्त्वेनातिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः ।

अहन्यहन्यात्मन एव ताव-
ज्ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतो वेदितुमस्ति शक्तिः ॥ २५ ॥

( नेपथ्ये । )

भो[1] वअस्स । अविहा अविहा ।

राजा—( गतिभेदेन परिक्रामन् । ) सखे । न भेतव्यं न भेतव्यम् ।

( नेपथ्ये । )

( पुनस्तदेव पठित्वा । ) कहं[2] ण भाइस्सं । एस मं कोवि पच्चावणद-सिरोहरं इक्खुं विअ तिण्हभङ्गं करेदि ।

राजा—( सदृष्टिक्षेपम् ) धनुस्तावत् ।

( प्रविश्य शार्ङ्गहस्ता )

यवनी—भट्टा[3] । एदं हत्थावावसहिदं सरासणं ।

( राजा सशरं धनुरादत्ते । )

( नेपथ्ये । )

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्त्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥ २६ ॥

राजा—( सरोषम् । ) कथं मामेवोद्दिशति । तिष्ठ कुणपाशन । त्वमिदानीं न भविष्यसि । ( शार्ङ्गमारोप्य । ) वेत्रवति । सोपानमार्गमादेशय ।

---

१ भो वयस्य । अविधा अविधा ।

२ कथं न भेष्यामि । एष मां कोऽपि पश्चादवनतशिरोधरमिक्षुमिव तीक्ष्णभङ्गं करोति ।

३ भर्त्तः । एतद्धस्तावापसहितं शरासनम् ।

प्रतीहारी--ईदो इदो देवो ।[1]

( सर्वे सत्वरमुपसर्पन्ति । )

राजा—( समन्ताद्विलोक्य । ) शून्यं खल्विदम् ।

( नेपथ्ये । )

[2]अविहा अविहा । अहं अत्तभवन्तं पेक्खामि । तुमं मं ण पेक्खसि । बिडालग्गहीदो मूसओ विअ णिरासोम्हि जीविदे संवुत्तो ।

राजा—भोस्तिरस्करिणीगर्वित । मदीयमस्त्रं त्वां द्रक्ष्यति । एष तमिषुं संधत्ते

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षति च द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ २७ ॥

( इत्यस्त्रं संधत्ते । )

( ततः प्रविशति विदूषकमुत्सृज्य मातलिः । )

मातलिः—

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥ २८ ॥

राजा—( अस्त्रमुपसंहरन् । ) अये मातलिः । स्वागतं महेन्द्रसारथे ।

( प्रविश्य । )

विदूषकः—[3]अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणन्दीअदि ।

---

१ इत इतो देवः ।

२ अविधा अविधा । अहमत्रभवन्तं प्रेक्षे । त्वं मां न प्रेक्षसे । बिडालगृहीतो मूषक इव निराशोऽस्मि जीविते संवृत्तः ।

३ अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते ।

मातलिः—( सस्मितम् । ) आयुष्मन् । श्रूयताम् । यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः ।

राजा—अवहितोऽस्मि ।

मातलिः—अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

राजा—अस्ति । श्रुतपूर्वं मया नारदात् ।

मातलिः—

सख्युस्ते स किल शतक्रतोरजय्य-
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ २९ ॥

स भवानात्तशस्त्र एवमिदानीं तमैन्द्ररथमारुह्य विजयाय प्रतिष्ठताम् ।

राजा—अनुगृहीतोऽहमनया मघवतः संभावनया । अथ माठव्यं प्रति भवता किमेवं प्रयुक्तम् ।

मातलिः—तदपि कथ्यते । किंचिन्निमित्तादपि मनःसंतापादायुष्मान्मया विक्लवो दृष्टः । पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणं कुरुते ।
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते हि जनः ॥ ३० ॥

राजा—( जनान्तिकम् । ) वयस्य । अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत्परिपालयितुं प्रजाः ।
अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः ॥ ३१ ॥

इति ।

विदूषकः—[1]जं भवं आणवेदि । ( इति निष्क्रान्तः । )

---

१ यद्भवानाज्ञापयति ।

मातलिः—आयुष्मान्रथमारोहतु ।

( राजा रथारोहणं नाटयति । )

( इति निष्क्रान्ताः सर्वे । )

इति षष्ठोऽङ्कः ।

---

## ॥ सप्तमोऽङ्कः ॥

( ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च । )

राजा—मातले । अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

मातलिः—( सस्मितम् । ) आयुष्मन् । उभयमप्यपरितोषं समर्थये ।

प्रथमोपकृतं मरुत्वतः
प्रतिपत्त्या लघु मन्यते भवान् ।
गणयत्यवदानतोषितो
भवतः सोऽपि न सत्क्रियागुणान् ॥ १ ॥

राजा—मातले । मा मैवम् । स खलु मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः । मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥ २ ॥

मातलिः—किमिव नामायुष्मानमरेश्वरान्नार्हति । पश्य ।

सुरसखस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥

राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किंवा भविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

**मातलिः**—सदृशमेवैतत् । ( स्तोकमन्तरमतीत्य । ) आयुष्मन् । इतः पश्य नाकपृष्ठगतस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु ।
संचिन्त्य गीतिक्षममर्थबन्धं
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

**राजा**— मातले । असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितः स्वर्गमार्गः । कतरस्मिन्मरुतां पथि वर्त्तामहे ।

**मातलिः**—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्त्तयति च प्रविभक्तरश्मिः ।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

**राजा**— मातले । अतः खलु सबाह्यान्तःकरणो ममान्तरात्मा प्रसीदति । ( रथाङ्गमवलोक्य । ) मेघपदवीमवतीर्णौ स्वः ।

**मातलिः**— कथमवगम्यते ।

**राजा**—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भिः-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

**मातलिः**— क्षणादायुष्मान्स्वाधिकारभूमौ वर्त्तिष्यते ।

**राजा**— ( अधोऽवलोक्य । ) वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः । तथाहि ।

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
संतानात्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ८ ॥

**मातलिः**— साधु दृष्टम् । ( सबहुमानं विलोक्य । ) अहो । उदाररमणीया पृथिवी ।

**राजा**— मातले । कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिस्यन्दी सान्ध्य इव मेघपरिघः सानुमानालोक्यते ।

**मातलिः**— आयुष्मन् । एष खलु हेमकूटो नाम किंपुरुषपर्वतस्तपसां सिद्धिक्षेत्रम् । पश्य ।

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽत्र सपत्नीकस्तपस्यति ॥ ९ ॥

**राजा**—तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

**मातलिः**— प्रथमः कल्पः ।

( नाट्येनावतीर्णौ । )

**राजा**— ( सविस्मयम् । )

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतयानिरुद्धत-
स्तवावतीर्णोऽपि रथो न लक्ष्यते ॥ १० ॥

**मातलिः**— एतावानेव शतक्रतोरायुष्मतश्च विशेषः ।

**राजा**— मातले । कतमस्मिन्प्रदेशे मारीचाश्रमः ।

**मातलिः**— ( हस्तेन दर्शयन् । )

वल्मीकार्धनिमग्नमूर्त्तिरुरसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥११॥

**राजा**— नमस्ते कष्टतपसे ।

**मातलिः**— ( संयतप्रग्रहं रथं कृत्वा । ) महाराज । एतावदितिपरिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

**राजा**— स्वर्गादधिकतरं निर्वृतिस्थानम् । अमृतह्रदमिवावगाढोऽस्मि ।

**मातलिः**— ( रथं स्थापयित्वा । ) अवतरत्वायुष्मान् ।

**राजा**— ( अवतीर्य । ) मातले । भवान्कथमिदानीम् ।

**मातलिः**— संयन्त्रितो मया रथः । वयमप्यवतरामः । ( तथा कृत्वा । ) इत आयुष्मन् । ( परिक्रम्य । ) दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः ।

**राजा**— ननु विस्मयादवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥१२॥

**मातलिः**— उत्सर्पिणी खलु महतां प्रार्थना । (परिक्रम्य । आकाशे । ) अये वृद्धशाकल्य । किमनुतिष्ठति भगवान्मारीचः । किं ब्रवीषि । दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तत्तस्यै महर्षिपत्नीसहितायै कथयतीति ।

**राजा**— (कर्णं दत्वा ।) अये । प्रतिपाल्यावसराः खलु मुनयः ।

**मातलिः**— ( राजानमवलोक्य ।) अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान् । यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि ।

**राजा**— यथा भवान्मन्यते । ( इति स्थितः । )

**मातलिः**— आयुष्मन् । साधयाम्यहम् । ( इति निष्क्रान्तः । )

**राजा**— ( निमित्तं सूचयित्वा । )

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥१३॥

( नेपथ्ये । )

[१]मा क्खु चावलं करेहि । कहं गदो एव्व अत्तणो पकिदिं ।

**राजा**— ( कर्णं दत्वा । ) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते । ( शब्दानुसारेणावलोक्य । सस्मितम् । ) अये । को नु खल्वयमनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥१४॥

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः । )

**बालः**— [२]जिम्भ सिंघ । दन्ताइं दे गणइस्सं ।

**प्रथमा**— [३]अविणिद । किं णो अपच्चणिव्विसेसाणि सत्ताणि विप्पअरेसि । हन्त वड्ढइ दे संरम्भो । ठाणे क्खु इसिजणेण सव्वदमणोत्ति किदणामहेओसि ।

**राजा**—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः । नूनमनपत्यता मां वत्सलयति ।

---

१ मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् ।

२ जृम्भस्व सिंह । दन्तास्ते गणयिष्यामि ।

३ अविनीत । किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त वर्धते ते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

द्वितीया—ऐसा क्खु केसरिणी तुमं लङ्घेदि। जइ से पुत्तअं ण मुञ्चेसि।

बालः—(सस्मितम्।) अह्महे। बलिअं क्खु भीदोह्मि। (इत्यधरं दर्शयति।)

राजा—

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः॥ १९॥

प्रथमा—वैच्छ। एदं बालमिइन्दअं मुञ्च। अबरं दे कीलणअं दाइस्सं।

बालः—कैहिं। देहि णं। (इति हस्तं प्रसारयति।)

राजा—कथं चक्रवर्तिलक्षणमप्यनेन धार्यते। तथा ह्यस्य

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम्॥ १६॥

cf. on p. 68

द्वितीया—सुँव्वदे। ण सक्को एसो वाआमेत्तेण विरमाविदुं। गच्छ। मम केरए उडए मक्कण्डेअस्स इसिकुमारअस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठदि। तं से उबहर।

प्रथमा—तँह। (इति निष्क्रान्ता।)

---

१ एषा खलु केसरिणी त्वां लङ्घयति। यद्यस्याः पुत्रकं न मुञ्चसि।

२ अहो। बलीयः खलु भीतोऽस्मि।

३ वत्स। एतं बालमृगेन्द्रकं मुञ्च। अपरं ते क्रीडनकं दास्यामि।

४ कुत्र। देह्येनम्।

५ सुव्रते। न शक्य एष वाचामात्रेण विरमयितुम्। गच्छ। मदीय उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति। तमस्योपहर।

६ तथा।

**बालः**— [1]इमिणा एव्व दाव कीलिस्सं । ( इति तापसीं विलोक्य हसति । )

**राजा**— स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७ ॥

**तापसी**— [2]होदु । ण मं अअं गणेदि । ( पार्श्वमवलोकयति । ) को एत्थ इसिकुमाराणं । ( राजानमवलोक्य । ) भद्दमुह । एहि दाव । मोएहि इमिणा दुम्मोअहत्थग्गाहेण डिम्भलीलाए बाहीअमाणं बालमिइन्दअं ।

**राजा**— ( उपगम्य । सस्मितम् । ) अयि भो महर्षिपुत्र ।

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मनस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनम् ॥ १८ ॥ cf. p110

**तापसी**— [3]भद्दमुह । ण हु अअं इसिकुमारओ ।

**राजा**— आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । ( यथाभ्यर्थितमनुतिष्ठन्बालस्पर्शमुपलभ्य । आत्मगतम् । )

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।

---

१ अनेनैव तावत्क्रीडयिष्यामि ।

२ भवतु । न मामयं गणयति । कोऽत्र ऋषिकुमाराणाम् । भद्रमुख । एहि तावत् । मोचयानेन दुर्मोचहस्तग्राहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रकम् ।

३ भद्रमुख । न खल्वयमृषिकुमारः ।

कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमङ्गात्कृतिनः प्ररूढः ॥ १९ ॥

तापसी— ( उभौ निर्वर्ण्य । ) अच्छरिअं अच्छरिअं[1] ।

राजा— आर्ये । किमिव ।

तापसी— इमस्स[2] बालअरूवस्स दे बि संवादिणी आकिदित्ति विह्माविदह्मि । अपरिइदस्स बि दे अप्पडिलोमो संवुत्तोत्ति ।

राजा— ( बालमुपलालयन् । ) न चेन्मुनिकुमारोऽयम् । अथ कोऽस्य व्यपदेशः ।

तापसी— पुरुवंसो[3] ।

राजा— ( आत्मगतम् । ) कथमेकान्वयो मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् । cf p. 100 in Keil. Gram
नियतैकयतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

( प्रकाशम् । ) न पुनरात्मगत्या मानुषाणामेष विषयः ।

तापसी— जहँ[4] भद्दमुहो भणादि । अच्छरासम्बन्धेण इमस्स जणणी एत्थ देवगुरुणो तवोवणे पसूदा ।

राजा— ( अपवार्य । ) हन्त द्वितीयमिदमाशाजननम् । ( प्रकाशम् । ) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

---

१ आश्चर्यमाश्चर्यम् ।

२ अस्य बालकरूपस्य तेऽपि संवादिन्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रतिलोमः संवृत्त इति ।

३ पुरुवंशः ।

४ यथा भद्रमुखो भणति । अप्सरःसंबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ।

**तापसी**— [१]को तस्स धम्मदारपरिच्चाइणो णाम संकीतिदुं चिन्तिस्सदि ।

**राजा**— ( स्वगतम् । ) इयं खलु कथा मामेव लक्षीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छेयम् । ( विचिन्त्य । ) अथवा । अन्यायः परदारपृच्छाव्यापारः ।

( प्रविश्य मृण्मयूरहस्ता )

**तापसी**— [२]सव्वदमण । सउन्दलावण्णं पेक्ख ।

**बालः**— ( सदृष्टिक्षेपम् । ) [३]कहिं वा मे अम्बा ।

**उभे**— [४]णामसारिस्सेण वञ्चिदो माउवच्छलो ।

**द्वितीया**— [५]वच्छ । इमस्स मित्तिआमोरअस्स रम्मत्तणं देक्खत्ति भणिदोसि ।

**राजा**— ( आत्मगतम् । ) किंवा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ।

**बालः**— [६]अज्जए । रोअदि मे एसो भद्दमोरओ । ( इति क्रीडनकमादत्ते । )

**प्रथमा**— ( विलोक्य । सोद्वेगम् । ) [७]अह्महे । रक्खाकरण्डअं से मणिबन्धे ण दीसदि ।

**राजा**— अलमलमावेगेन । नन्विदमस्य सिंहशावविमर्दात्परिभ्रष्टम् । ( इत्यादातुमिच्छति । )

---

१ कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तितुं चिन्तयिष्यति ।
२ सर्वदमन । शकुन्तलावण्यं प्रेक्षस्व ।
३ कुत्र वा मेऽम्बा ।
४ नामसादृश्येन वञ्चितो मातृवत्सलः ।
५ वत्स । अस्य मृत्तिकामयूरकस्य रम्यत्वं पश्येति भणितोऽसि ।
६ आर्यिके । रोचते म एष भद्रमयूरकः ।
७ अहो । रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते ।

उभे— [1]मा क्खु मा क्खु एदं अवलम्बिअ। कहं गहीदं णेण।
( इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः । )

राजा— किमर्थं प्रतिषिद्धाः स्मः ।

प्रथमा— [2]सुणादु महाराओ। एसा अवराजिदा णाम ओसही इमस्स जातकम्मसमए भअवदा मारीएण दिण्णा। एदं किल मादापिदरो अप्पाणं च वज्जिअ अवरो भूमिपडिदं ण गेण्हादि।

राजा— अथ गृह्णाति ।

प्रथमा— [3]तदो तं सप्पो भविअ दंसइ ।

राजा— भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।

उभे— [4]अणेअसो ।

राजा— ( सहर्षम् । आत्मगतम् । ) कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि । ( इति बालं परिष्वजते । )

द्वितीया— [5]सुव्वदे । एहि । इमं वुत्तन्तं णिअमव्वावुडाए सउन्दलाए णिवेदेह्म ।

( इति निष्क्रान्ते । )

बालः— [6]मुञ्च मं । जाव अम्बाए सआसं गमिस्सं ।

राजा— पुत्रक । मया सहैव मातरमभिनन्दिष्यसि ।

बालः— [7]मम क्खु तादो दुस्सन्दो । ण तुमं ।

---

१ मा खलु मा खल्वेतदवलम्ब्य । कथं गृहीतमनेन ।

२ शृणोतु महाराजः । एषापराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वापरो भूमिपतितां न गृह्णाति ।

३ ततस्तं सर्पो भूत्वा दशति ।

४ अनेकशः ।

५ सुव्रते । एहि । इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।

६ मुञ्च माम् । यावदम्बायाः सकाशं गमिष्यामि ।

७ मम खलु तातो दुष्यन्तः । न त्वम् ।

**राजा**— ( सस्मितम् । ) एष विवाद एव प्रत्याययति ।

( ततः प्रविशत्येकवेणीधरा शकुन्तला । )

**शकुन्तला**— वि[1]आरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसा आसि अत्तणो भाअहेएसु । अहवा । जह साणुमदीए आचक्खिदं । तह संभावीअदि एदं ।

**राजा**— ( शकुन्तलां विलोक्य । ) अये । सेयमत्रभवती शकुन्तला । यैषा

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ॥ २१ ॥

**शकुन्तला**— ( पश्चात्तापविवर्णं राजानं दृष्ट्वा । ) ण[2] क्खु अज्जउत्तो विअ । तदो को एसो दाणिं किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ।

**बालः**— ( मातरमुपेत्य । ) अ[3]म्ब । को एसो पुरिसो मं पुत्तेत्ति आलिङ्गदि ।

**राजा**— प्रिये । क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम् । यदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि ।

**शकुन्तला**— ( आत्मगतम् । ) हि[4]अअ । समस्सस समस्सस ।

---

१ विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न म आशासीदात्मनो भागधेयेषु । अथवा । यथा सानुमत्याचष्टम् । तथा संभाव्यत एतत् ।

२ न खल्वार्यपुत्र इव । ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ।

३ अम्ब । क एष पुरुषो मां पुत्रेत्यालिङ्गति ।

४ हृदय । समाश्वसिहि समाश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन । आर्यपुत्रः खल्वेषः ।

परिच्चत्तमच्छरेण अणुअम्पिअह्मि देव्वेण । अज्जउत्तो क्खु एसो ।

**राजा**— प्रिये ।

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ २२ ॥

**शकुन्तला**— [1]जेदु जेदु अज्जउत्तो– ( इत्यर्धोक्ते बाष्पकण्ठी विरमति । )

**राजा**— सुन्दरि ।

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारं पाटलोष्ठपुटं मुखम् ॥ २३ ॥

**बालः**— [2]अम्ब । को एसो ।

**शकुन्तला**— [3]वच्छ । दे भाअहेआइं पुच्छेहि ।

**राजा**— ( शकुन्तलायाः पादयोः प्रणिपत्य । )

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥२४॥

**शकुन्तला**— [4]उट्ठेदु अज्जउत्तो । णूणं मे सुअरिअप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणाममुहं आसि । जेण साणुक्कोसो बि अज्जउत्तो मइ विरसो संवुत्तो ।

( राजोत्तिष्ठति । )

---

१ जयतु जयत्वार्यपुत्रः ।

२ अम्ब । क एषः ।

३ वत्स । ते भागधेयानि पृच्छ ।

४ उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीत् । येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः ।

**शकुन्तला**— अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ।

**राजा**— उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भवेयम् ॥ २५ ॥

( इति यथोक्तमनुतिष्ठति । )

**शकुन्तला**— ( नाममुद्रां दृष्ट्वा । ) अज्जउत्त । एदं तं अङ्गुलीअअं ।

**राजा**— अस्मादङ्गुलीयोपलम्भात्खलु स्मृतिरुपलब्धा ।

**शकुन्तला**— विसमं किदं णेण । जं तदा अज्जउत्तस्स पच्चाअणकाले दुल्लहं आसि ।

**राजा**— तेन ह्यृतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

**शकुन्तला**— ण से विस्ससामि । अज्जउत्तो एव्व णं धारेदु।

( ततः प्रविशति मातलिः । )

**मातलिः**— दिष्ट्या । धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान्वर्धते ।

**राजा**— अभूत्संपादितस्वादुफलो मे मनोरथः । मातले । न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात् ।

**मातलिः**— ( सस्मितम् । ) किमीश्वराणां परोक्षम् । एत्वायुष्मान् । भगवान्मारीचस्ते दर्शनं वितरति ।

---

१ अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ।

२ आर्यपुत्र । एतत्तदङ्गुलीयकम् ।

३ विषमं कृतमनेन । यत्तदार्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत् ।

४ नास्मै विश्वसिमि । आर्यपुत्र एवैतद्धारयतु ।

**राजा**— शकुन्तले । अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

**शकुन्तला**—[1]हिरिआमि अज्जउत्तेण सह गुरुसमीवं गन्तुं ।

**राजा**— अप्याचरितव्यमभ्युदयकालेषु । एह्येहि ।

( सर्वे परिक्रामन्ति । )

( ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः । )

**मारीचः**— ( राजानमवलोक्य । ) दाक्षायणि ।

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ २६ ॥

**अदितिः**— [2]संभावणीआणुभावा से आकिदी ।

**मातलिः**— आयुष्मन् । एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः । तावुपसर्प ।

**राजा**— मातले । एतौ

प्राहुर्द्वादशधास्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥ २७ ॥

**मातलिः**— अथ किम् ।

**राजा**— ( प्रणिपत्य । ) उभाभ्यामपि वासवानुयोज्यो दुष्यन्तः प्रणमति ।

**मारीचः**— वत्स । चिरं जीव । पृथिवीं पालय ।

**अदितिः**— [3]वच्छ । अप्पडिरहो होहि ।

---

१ जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् ।

२ संभावनीयानुभावास्याकृतिः ।

३ वत्स । अप्रतिरथो भव ।

**शकुन्तला**— दा[1]रअसहिदा वो पादवन्दणं करेमि ।

**मारीचः**— वत्से ।

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोम्या सदृशी भव ॥ २८ ॥

**अदितिः**— जा[2]दे । भत्तुणो बहुमदा होहि । अवस्सं दीहाऊ वच्छओ उहअकुलणन्दणो होदु । उबविसह ।

( सर्वे प्रजापतिमभित उपविशन्ति । )

**मारीचः**— ( एकैकं निर्दिशन् । )

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥ २९ ॥

**राजा**— भगवन् । प्रागभिप्रेतसिद्धिः । पश्चाद्दर्शनम् । अतोऽपूर्वः खलु वोऽनुग्रहः । कुतः ।

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु संपदः ॥ ३० ॥

**मातलिः**— एवं विधातारः प्रसीदन्ति ।

**राजा**— भगवन् । इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनादूढपूर्वां तद्दुहितरमवगतोऽहम् । तच्चित्रमिव मे प्रतिभाति।

यथा गजो नेति समक्षरूपे
तस्मिन्नतिक्रामति संशयः स्यात् ।

---

१ दारकसहिता वां पादवन्दनं करोमि ।

२ जाते । भर्तुर्बहुमता भव । अवश्यं दीर्घायुर्वत्सक उभयकुलनन्दनो भवतु । उपविशत ।

पदानि दृष्ट्वा तु भवेत्प्रतीति-
स्तथाविधो मे मनसो विकारः ॥ ३१ ॥

**मारीचः**— वत्स । अलमात्मापराधशङ्कया । संमोहोऽपि त्वय्यनुपपन्नः । श्रूयताम् ।

**राजा**— अवहितोऽस्मि ।

**मारीचः**— यदैवाप्सरस्तीर्थावतरणात्प्रत्यक्षवैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीमुपगता । तदैव ध्यानादवगतोऽस्मि । दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति । स चायमङ्गुलीयकदर्शनावसानः ।

**राजा**— ( सोच्छ्वासम् । ) एष वचनीयान्मुक्तोऽस्मि ।

**शकुन्तला**— ( स्वगतम् । ) [1]दिट्ठिआ । अकारणपच्चादेसी ण अज्जउत्तो । ण हु सत्तं अत्ताणं सुमरेमि । अहवा पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो । जदो सहीहिं संदिट्ठह्मि । भत्तुणो अङ्गुलीअअं दंसइदव्वंत्ति ।

**मारीचः**— वत्से । चरितार्थासि । सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य ।

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२ ॥

**राजा**— भगवन् । अत्र खलु मे वंशप्रतिष्ठा । ( इति बालं हस्तेन गृह्णाति । )

**मारीचः**— तथाभाविनमेनं चक्रवर्तिनमवगच्छतु भवान् । पश्य ।

---

१ दिष्ट्या । अकारणप्रत्यादेशी नार्यपुत्रः । न खलु शप्तमात्मानं स्मरामि । अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः। यतः सखीभ्यां संदिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति ।

रथेनानुत्खातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥३३॥

राजा— भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशास्महे ।

अदितिः— [1]भअवं । इमाए दुहिदुमणोरहसम्पत्तीए कण्णो वि दाव सुदवित्थारो करीअदु । दुहिदुवच्छला मेणआ इह एव्व मं परिचरन्ती चिट्ठइ ।

शकुन्तला— (आत्मगतम् ।) [2]मणोरहो क्खु मे भणिदो भअवदीए ।

मारीचः— तपःप्रभावात्प्रत्यक्षं सर्वमेव तत्रभवतः ।

राजा— अतः खलु ममानतिक्रुद्धो मुनिः ।

मारीचः— तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः। कः कोऽत्र भोः।

(प्रविश्य ।)

शिष्यः— भगवन् । अयमस्मि ।

मारीचः— गालव । इदानीमेव विहायसा गत्वा मम वचनात्तत्रभवते कण्वाय प्रियमावेदय । यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

शिष्यः— यदाज्ञापयति भगवान् । (इति निष्क्रान्तः ।)

मारीचः— वत्स । त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व ।

राजा— यदाज्ञापयति भगवान् ।

मारीचः— अपि च ।

---

१ भगवन् । अस्या दुहितृमनोरथसंपत्तेः कण्वोऽपि तावच्छ्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनकैहैव मां परिचरन्ती तिष्ठति ।

२ मनोरथः खलु मे भणितो भगवत्या ।

तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञः स्वर्गिणः प्रीणयालम् ।
युगशतपरिवर्तानेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ ३४ ॥

**राजा**— भगवन् । यथाशक्ति श्रेयसे यतिष्ये ।

**मारीचः**— वत्स । किं ते भूयः प्रियमुपहरामि ।

**राजा**— अतःपरमपि प्रियमस्ति । यदिह भगवान्प्रियं कर्तुमिच्छति तर्हीदमस्तु ।

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहतां महीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३५ ॥

( इति निष्क्रान्ताः सर्वे । )

## इति सप्तमोऽङ्कः ।

**समाप्तमिदमभिज्ञानशकुन्तलं नाम नाटकम् ।**



## अथाभिज्ञानशाकुन्तलटीकार्थद्योतनिकाभिधा ।

यत्रैधाजनि दशधा द्विधागतं यद्यज्जातं दशविधमेति षोडशत्वम् ।
यद्गीतं सममहदादिकस्य चाद्यं तेजस्तज्जयति हिमोष्णरूपमग्र्यम् ॥ १ ॥

उद्दिश्यामरनिम्नगां गतवतोः श्रुत्वा कलिं शैशवे
यः साक्षात्करवाणि तामिति जटाजूटोपकण्ठं गतः ।
पीत्वा पुष्कलपुष्करेण न किमप्यत्रेति विस्मापय-
न्पित्रोर्विग्रहवग्रहं विहितवान्पायाद्गजास्यः स वः ॥ २ ॥

नाट्यवेदाब्धिमालोड्य ताण्डवं यो विनिर्ममौ ।
स्वात्मनाभिनयन्तं तं प्रणमामि महानटम् ॥ ३ ॥

या लास्यसंप्रयोगेण शिवाराधनतत्परा ।
भवतां भूतये भूयात्सा सदा सर्वमङ्गला ॥ ४ ॥

वाचिकाद्यभिनयोपम(?)नाट्याचार्यमत्र भरतं मुनिमीडे ।
लास्यताण्डवनियोजनलीलाकौशलेन परितोषितभर्गम् ॥ ५ ॥

अथ नाटकादौ पूर्वरङ्गाङ्गभूतामाशीरूपां चतुरस्रतालानुसारिणीमष्टपदां सूत्रधारो नान्दीं पठति—**या सृष्टिरिति** ॥ या तनुः स्रष्टुर्ब्रह्मण आद्या सृष्टिः । जलमित्यर्थः ।"अप एव ससर्जादौ तासु वीर्यमवासृजत्" इति स्मरणात् ॥ सर्वादौ सर्गात्सर्गोत्पत्तिहेतुत्वाच्चातिशयो ध्वन्यते ॥ या च विधिर्विधानं श्रुतिस्मृत्युक्तं तेन हुतं दत्तं हविर्हवनीयद्रव्यजातं वहत्यादत्ते । वह्निरित्यर्थः ॥ वहतिनाधाराधेयसंबन्धेनादानं लक्ष्यते । फलपर्यन्ततांप्रापणं च व्यज्यते । अविधिहुतं भस्मीभवति । अतएव विधिहुतमित्युक्तिः । अन्यथा हवनीयस्यैतदव्यभिचारादर्थपौनरुक्त्यं स्यात् ॥ एतेनातिशयो ध्वनितः ॥ अथ च वह्निरित्यौणादिके निप्रत्यये सिद्धम् । तदपि सूचितम् ॥ या च होत्री यजमानरूपा ॥ जुहोतीति होत्रीतीन्द्रादीनामपि तर्पकत्वादतिशयो व्यज्यते । अतएव नात्मादिपदप्रयोगः ॥ ये च द्वे कालं रात्रिंदिवरूपं विधत्तः कुरुतः ॥ विपूर्वो धाञ् करणार्थे वर्तते ॥ चन्द्रार्कावित्यर्थः । नित्यस्यापि कालस्यैतौ कारणत्वेनोक्ताविति स एव ॥ या च श्रुतिः श्रवणेन्द्रियं तस्य विषयो गोचरो गुणः शब्दाख्यो यस्याः सा ॥ "श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि" इति विश्वः॥ विश्वं जगद्व्याप्य स्थिता । तेनाकाशः ॥ अत्रापि जगद्व्यापकस्थित्या स व्यज्यते । अतएव श्रुतिविषयगुणेत्येतावन्मात्रं नोपात्तम् । तावत्युच्यमाने प्रक्रान्तातिशयव्यङ्ग्यभङ्गः स्यात् । किंच "शब्दैकगुण आकाशः शब्दस्पर्शगुणो मरुत्" इत्यादिना साङ्ख्यमते मरुदादीनामपि शब्दगुणत्वस्योक्तेर्विवक्षितार्थ(र्था)लाभश्च । पारिशेष्यात्तल्लाभ इति चेत् । आदिवाक्येन तल्लाभोऽन्तेन

